॥ श्रीः ॥

अनुभूतिस्वरूपाचार्यप्रणीतं

# सारस्वतंनामव्याकरणं।

तदेवत्

रूपदुर्गवास्तव्यसूर्यदत्तशास्त्रि

संपादित-

टिप्पण्या सनाथीकृत्य

श्रीधरात्मज कृष्णलाल-

शर्म्मभिः

स्वकीये "ज्ञानसागर" यन्त्रालये

यन्त्रितम्

संवत् १९५७

# विज्ञापनमिदम्

महाभारतप्रभृतीतिहासा भागवतप्रमुखपुराणानि
स्तोत्राणिच सहस्रनामादीनि अन्येपि नाटक-
भाण—चंपू—न्याय—प्रभृतिग्रंथाः शतशः
सीसकाक्षरैः शिलाक्षरैश्च मुद्रिताःपण्ये
प्रतिष्ठापिताःसन्ति तैश्च ग्राहका
मूल्यप्रेषणेन सूचनानुसारं
सनाथा भविष्यन्ति

श्रीमत्सुदत्ताचिच्चकोरः
कृष्णलालशर्म्मा.

॥ श्रीः ॥

# सारस्वतं व्याकरणम् ॥

श्रीगणेशाय नमः ।

प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ॥ सारस्वतीमृजुं कुर्व्वे प्रक्रियां नातिविस्तरां ॥ १ ॥ इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ॥ प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥ तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ॥

## अइउऋऌसमानाः ॥ १ ॥

अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते तेषां समानसंज्ञा च विधीयते + नैतेषु सूत्रेषु सन्धिरनु सन्धेयोऽविवक्षितत्वात्, विवक्षितस्तु सन्धिर्भवतीति नियमात् लौकिकप्रयोगानिष्पत्तये समयमात्रत्वाच्च ॥ १ ॥

## ह्रस्वदीर्घप्लुतभेदाः सवर्णाः[1] ॥ २ ॥

एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । लोकाच्छेषस्य सिद्धिरिति वक्ष्याति ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्या । एकमात्रो ह्रस्वः द्विमात्रो दीर्घः त्रिमात्रः प्लुतः ।व्यञ्जनञ्चार्धमात्रकम् । एषां मध्ये तूदात्तादिभेदाःसन्ति । उच्चैरुपलभ्यमान उदात्तः । नीचैरनुदात्तः । समवृत्या स्वरितः । एऐओऔ संध्यक्षराणि एषां ह्रस्वा न संति ॥ २ ॥

## उभये स्वराः ॥ ३ ॥

अकारादयः पञ्च चत्वार एकारादय इत्युभये स्वरा उच्यन्ते ॥ ३ ॥

## अवर्ज्जा नामिनः ॥ ४ ॥

अवर्णवर्ज्जाः स्वरा नामिन उच्यन्ते । अनुक्रान्ता[2]स्तावत् स्वराः । प्रत्याहारं जिग्राहयिषया व्यंजना

---

१ समानो वर्णो धर्मो येषु ते तथा २. अनुक्रमेण गणनीयाः.

न्यनुक्रामति यहवरल ञणनङम झढधघभ जडद गब खफछठथ चटतकप शषसेति ॥ ४ ॥

## आद्यन्ताभ्याम् ॥ ५ ॥

प्रत्याहारं जिघृक्षता[1] आद्यन्ताभ्यामेते वर्णा ग्राह्याः आदिवर्णोऽन्त्येन सह गृह्यमाणस्तन्नामा प्रत्याहारः। तथाहि—अकारो वकारेण सह गृह्यमाणोऽवप्रत्याहारः, स च अइउऋऌएऐओऔह यवरलञणनङमझढधघभजडदगब—इत्येतावत्संख्याकः संपद्यते। चटतकप—इति—चपप्रत्याहारः। जडदगब—इति जबप्रत्याहारः। झढधघभ—इति झभप्रत्याहारः। ञणनङम—इति—ञमप्रत्याहारः। एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं स तत्र तत्र ग्राह्यः; प्रत्याहाराणां सङ्ख्यानियमस्तु नास्ति

## हसा व्यञ्जनानि ॥ ६ ॥

---

१. गृहीतुमिच्छतीति (जिघृक्षति) जिघृक्षतीतिजिघृक्षन्, तेन तथा.

हकारादयः सकारान्ता वर्णा हसा व्यंजनानि भवन्ति। स्वरहीनं व्यंजनं तेष्वकारः सुखमुखोच्चारणार्थत्वादित्संज्ञको भवति ॥ ६ ॥

## कार्यायेत् ॥ ७ ॥

प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञको भवति, यस्येत्संज्ञा तस्य लोपः ॥ ७ ॥ प्रत्यायाऽदर्शनं लुक् ॥

## वर्णादर्शनं लोपः ॥ ८ ॥

वर्णविरोधी[1] लोपश्च मित्रवदागमः शत्रुवदादेशः॥८॥

## स्वरानन्तरिता हसाःसंयोगः ॥९ ॥

कुचुटुतुपुवर्गाः उकारःपञ्चवर्णपरिग्रहणार्थः ॥ ९ ॥

## अर् ओ नामिनो गुणः ॥ ११ ॥

नामिस्थानिका अर ए ओ एते गुणसंज्ञका भवन्ति ॥ १० ॥

---

1 एकंवर्णनाशयतिअन्यस्योत्पत्तिप्रतिबध्नातिसतथा.

## ऐ औ वृद्धिः ॥ ११ ॥

आ आर ऐ औ एते वृद्धिसंज्ञका भवन्ति ॥ ११ ॥

## अन्त्यस्वरादिष्टिः ॥ १२ ॥

अन्त्यो यः स्वरस्तदादिर्वर्णः स टिसंज्ञको भवति ॥ १२ ॥

## अन्त्यात्पूर्वउपधा ॥ १३ ॥

अन्त्यात् वर्णमात्रात्पूर्वो[1] यो वर्णः स उपधासंज्ञको भवति ॥ १३ ॥

## असंयोगादिपरो ह्रस्वो लघुः ॥ १४ ॥

## विसर्गानुस्वारयोगादिपरो दीर्घश्च गुरुः ॥ १५ ॥

## मुखनासिकावचनोऽनुनासिकः ॥ १६ ॥

---

१ आक्षेपाद्वर्णमात्रोपलब्धिर्बोद्धव्या.

मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः। द्विबिन्दुर्विसर्गः। शिरोबिंदुरनुस्वारः। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च[1]। ≍क इति जिह्वामूलीयः।≍प इत्युपध्मानीयः। अं इत्यनुस्वारः। अः इति विसर्गः॥ १४॥ १५॥ १६॥

इति संज्ञा प्रक्रिया॥

## ॥ अधुना स्वरसंधिर्विधीयते ॥

### इयं स्वरे ॥ १ ॥

इवर्णो यत्वमापद्यते स्वरे परे। दधि आनय इति स्थिते दध्य् आनय इति तावद्भवति ॥ १ ॥

### हसेर्हसः ॥ २ ॥

स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भव-

१ चकारात्स्वस्ववर्गानुकूलस्थानमप्यवधेयम्.

ति—इति धकारस्य द्वित्वं, पुनर्द्वित्वे प्राप्ते न द्विरुक्तस्य द्विरुक्तिः, द्वित्वविधानसामर्थ्यात् द्वावेव शिष्येते अन्ये हसा लुप्यंते ॥ २ ॥

## झबे जबाः ॥ ३ ॥

झसानां झबे परे जबा भवन्ति। इति पूर्वधकारस्य दकारः। सवर्णत्वात् " वर्ग्यो वर्ग्येण सवर्णः" इति वचनात् यथासंख्यं वा वक्तव्यं। स्वरहीनं परेण संयोज्यं। दद्ध्यानय इति सिद्धम्। गौरी अत्र। अर्ह इति विशेषणान्न रेफस्य द्वित्वं किन्तु ( रहाद्यपोर्द्विः[1] ) स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति 'जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम्।' गौर्य्यत्र। स्वर इत्यनुवर्तते। एवमन्यत्रापि। यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदानुवृ-

---

१ हकारग्रहणं हर्य्यनुभवादौ द्वित्वकृते।

त्तिर्ज्ञातव्या । ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ॥ ३ ॥

## उवम् ॥ ४ ॥

उवर्णो वत्वमापद्यते स्वरे परे। मधु—अत्र—मध्वत्र।

## ऋरम् ॥ ५ ॥

ऋवर्णो रत्वमापद्यते स्वरे परे। पितृ—अर्थः। पित्रर्थः।

## ऌलम् ॥ ६ ॥

ऌवर्णो लत्वमापद्यते स्वरे परे । ऌ—अनुबन्धः लनुबन्धः ॥ ६ ॥

## ए अय् ॥ ७ ॥

एकारो अय् भवति स्वरे परे । ने—अनं नयनं ॥

## ओ अव् ॥ ८ ॥

ओकारो अव् भवति स्वरे परे। लो—अनम् लवनम्, भो—अति भवति ॥

गवादेरवर्णागमोऽक्षादौ वक्तव्यः ॥ ❀ ॥
गो-अक्षः गवाक्षः । गो इन्द्रः गवेन्द्रः । गो अजिनम् गवाजिनं । प्र ऊढः प्रौढः स्व ईरिणी स्वैरिणी । अक्ष ऊहिणी अक्षौहिणी सेना । क्वचित् स्वरवद्यकारः । यथाऽध्वपरिमाणे—गव्यूतिः । अन्यत्र गवां मिश्रीभावे गोयूतिः ॥ ७ ॥

ऐ आय् ॥ ९ ॥

ऐकार आय् भवति स्वरे परे । नै अकः नायकः॥९॥

औ आव् ॥ १० ॥

औकार आव् भवति स्वरे परे। तौ इह ताविह ॥१०॥

यवोर्लोपश् वा पदान्ते ॥ ११ ॥

पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति स्वरे परे। तौ इह ताविह ता इह । ते आगताः तयागताः त आगताः । पटो इह पटविह पट इह लोपशि पुनर्न सन्धिः ॥

छन्दसि तु भवति हे सखे इति हे सखयिति हे सखेति ॥ ११ ॥

## एदोतोऽतः ॥ १२ ॥

पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र पटो अत्र पटोऽत्र ॥ १२ ॥

## सवर्णे[1] दीर्घः सह ॥ १३ ॥

सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र । दधि इह दधीह । भानु उदयं भानूदयम् ॥ १३ ॥

" अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ॥ पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते " ॥१॥ " सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् । परेण पूर्वबाधो हि प्रायशो दृश्यतामिह" ॥ २॥

## अ इ ए ॥ १४ ॥

---

१ कारकविभक्तित्वान्न तृतीया

अवर्ण इवर्णे परे सह ए भवति। तव इदं तवेदं मम इदं ममेदं।

इलादेरीषादौ टेर्लोपो वक्तव्यः॥ ❋ ॥

हल ईषा हलीषा। लाङ्गल ईषा। लाङ्गलीषा। मनस् ईषा मनीषा॥ १४॥

ओमि च॥ १५॥

ओमि परे नित्यं टेर्लोपो भवति। अद्य ओम्। अद्योम्॥ १५॥

उ ओ॥ १६॥

अवर्ण उवर्णे परे सह ओ भवति। गंगा उदकम् गङ्गोदकम्॥ १६॥

ऋ अर्॥ १७॥

अवर्ण ऋवर्णे परे सह अर् भवति। तव ऋद्धिः तवर्द्धिः॥ १७॥

## कचिदार् ॥ १८ ॥

अवर्ण ऋवर्णे परे सह कचिदार् भवति । ऋण ऋणं ऋणार्णं । शीत ऋतः शीतार्तः ॥ १८ ॥

## ऌ अल् ॥ १९ ॥

अवर्ण ऌवर्णे परे सह अल् भवति । तव ऌकारः तवल्कारः ।

ऋऌवर्णयोर्मिथः सावर्ण्यं वा वक्तव्यम् ॥ * ॥[1]

होतृ ऌकारः होतॄकार ॥

रलयोः सावर्ण्यं वा वक्तव्यम् * ॥

परि अङ्कः पर्य्यङ्कः पल्यङ्कः ॥ १९ ॥

## ए ऐ ऐ ॥ २० ॥

अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । तव एषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥ २० ॥

## ओ औ औ ॥ २१ ॥

---

१ वार्तिकमिति माधवः.

अवर्ण ओकारे औकारे च परे सह औकारो भवति। तव ओदनम् तवौदनम् । तव औन्नत्यम् तवौन्नत्यम् ॥ २१ ॥

## ओष्ठोत्वोर्वा[1] समासे ॥ २२ ॥

अवर्ण ओष्ठोत्वोः परयोर्वा सह ओत्वं भवति समासे सति। बिम्ब ओष्ठः बिम्बौष्ठः बिम्बोष्ठः। स्थूल ओतुः स्थूलौतुः स्थूलोतुः ॥ २२ ॥

॥ इति स्वरसन्धिः ॥

## ॥ अथ प्रकृतिभाव उच्यते ॥

## नामी ॥ १ ॥

अदसः अमी शब्दः सन्धिं न प्राप्नोति । अमी आदित्याः अमी उष्ट्राः अमी एडकाः ॥ १ ॥

## य्वे द्वित्वे ॥ २ ॥

ई च ऊ च ए च य्वे, ईकारान्त ऊकारान्त एका-

---

१ ओतुर्बिडालोमार्जारइत्यमरः.

क

चपादुत्तरस्य हकारस्य झभा वा भवन्ति । यद्ध-

र्गस्यपस्तद्वर्गगश्चतुर्थो भवति । तत् हविः तद्ध-

विः वाक् हरिः वाग्घरिः वाग्हरिः ॥ ४ ॥

## स्तोः[1] श्चुभिः श्चुः ॥ ५ ॥

स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः । सकारस्य शकारः । तवर्गस्य चवर्गः । कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रं तच्चित्रं ॥ तत् शास्त्रं तच्छास्त्रं ॥ ५ ॥

## न शात् ॥ ६ ॥

शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । विश् नः विश्नः ॥ प्रश् न प्रश्नः ॥ ६ ॥

---

१ स्तोरिति द्वंद्वैकत्वं पुस्त्वंतु छान्दसम् २ “अकृत्वासप्तमीमेतां तृतीयामकरोन्मुनिः श्चुनेतितस्मात्पूर्वेण सन्निपातःपरेणवा श्चुनेतिवक्त व्ये श्चुभिरिति वहुवचने शकारयोगे क्वचित्तत् श्मशानं इत्यादौ चुत्वं न भवति इति सूच्यते.

## ष्टुभिः ष्टुः ॥ ७ ॥

स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे ष्टुर्भवति । सकारस्य षकारः तवर्गस्य टवर्गः ॥ कष् षष्ठः कष् षष्ठः । कस् टीकते कष्टीकते ॥ तत् टीकते तट्टीकते ॥ ७ ॥

## तोर्लि लः ॥ ८ ॥

तवर्गस्य लकारे परे लकारो भवति ॥ तत् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति ॥ अन्तस्था द्विप्रभेदा रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति ॥ ८ ॥

## न षि ॥ ९ ॥

षकारे तवर्गस्य ष्टुत्वं न भवति ॥ भवान् षष्ठः भवान् षष्ठः ॥ ९ ॥

## टोरन्त्यात् ॥ १० ॥

पदान्ते वर्त्तमानाट्टवर्गात्परस्य स्तोष्टुर्न भवति।
षट् नरः षण्नरः षट् सीदन्ति ॥ १० ॥

नः सक् छ्ते ॥ ११ ॥

नान्तस्य पदस्य छ्ते परे सगागमो भवति ॥ टि-
त्किताावाद्यन्तयोर्वक्तव्यौ ॥ ❀ ॥
टित्वादादौ कित्वादन्ते ॥ राजन् चित्रं राजँश्चित्र-
म्। भवान् तनोति भवांस्तनोति[1] ॥ ११ ॥

शे चक् वा ॥ १२ ॥

नान्तस्य पदस्य शे परे वा चगागमो भवति ॥ भवान्
शूरः भवाञ्छूरः भवाञ्चशूरः भवाञ्शूरः ॥ १२ ॥

ङ्णनो ह्रस्वात् द्विः स्वरे ॥ १३ ॥

ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवंति स्व
रे परे पदान्ते ॥ प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुग-

१. यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैवगृह्यत इति सान्तेपदेऽपदान्त
वादपिनस्यानुस्वारः.

ण् इह सुगण्णिह । राजन् इह राजन्निह ॥१३॥

छः ॥ १४ ॥

ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ १४ ॥

खसे चपा झसानां ॥ १५ ॥

झसानां खसे परे चपा भवन्ति ॥ तव छत्रं तवच्छत्रं।
क्वचिद्दीर्घादपि वक्तव्यः[1] ॥ * ॥
ह्रीछः ह्रीच्छ । म्लेछ : म्लेच्छ ॥ १५ ॥

मोऽनुस्वारः ॥ १६ ॥

मकारस्यानुस्वारो भवति पदान्ते च[2] । तम् हसति तं हसति ॥ पटुम् वृथा पटुं वृथा ॥ १६ ॥

नश्चापदान्ते झसे ॥ १७॥

नकारस्य मकारस्य चापदान्ते वर्तमानस्यानुस्वारो

---

१. न केवलं ह्रस्वादेव किन्तु दीर्घादपि परस्य छस्य द्वित्वं स्यादिति व्यक्तव्यार्थं. २. चकारः क्वाचित्क इति माधवः तन्नेत्यन्ये चकारोत्रमानुकर्षणार्थः तेन नकारस्य मकारस्येत्युपलब्धम्.

भवति झसे परे ॥ यशान् सि यशांसि ॥ पुम् भ्यां पुंभ्यां ॥ १७ ॥

## यमा यपेस्य वा ॥ १८ ॥

अनुस्वारस्य यमा वा भवन्ति यपे परे । अस्य यपस्य सवर्णः ॥ तं करोति तङ्करोति ॥ तं तनोति तन्तनोति ॥ सँयन्ता सँय्यन्ता ॥ १८ ॥

## यवलपरे यवला वा ॥ १९ ॥

अनुस्वारस्य यवलपरे यवला वा भवंति । संवत्सरः सँव्वसर ॥ यं लोकं यँल्लोकम् ॥ १९ ॥

## ꣳछन्दसि ॥ २० ॥

छन्दस्यनुस्वारो ꣳकारमापद्यते सशषहरेफेषु परतः । हंसः हꣳसः ॥ २० ॥

## विसर्गसन्धिर्निगद्यते ॥

## विसर्जनीयस्य सः ॥ १ ॥

विसर्ज्जनीयस्य सकारो भवति खसे परे। कः तनोति कस्तनोति[1] ॥ १ ॥

## सषशे वा[2] ॥ २ ॥

विसर्ज्जनीयस्य सषशे परे वा सकारो भवति। कः शेते कश्शेते । कः षण्डः कष्षण्डः कः साधुः कस्साधुः ॥ २ ॥

## कुप्वोः ⨯ क ⨯ पौ वा ॥ ३ ॥

विसर्ज्जनीयस्य कवर्गपवर्गसम्बंधिनि खसे परे ⨯क ⨯पौ वा भवतः । कपावुच्चारणार्थौ । कः करोति क ⨯ करोति। कः पचति क ⨯ पचति। कः पठति क ⨯ पठति ॥ वाचस्पत्यादयः संज्ञाश-

---

१ कःत्सरुःकःक्षेमइत्यादौ कथं न सत्वं (उच्यते) उपरितनस्थले सत्वापत्यभावसाधनाय योगविभागः कर्तव्यः स च कीदृक् विसर्जनीयस्य सित्येको योगः अः इत्यपरो योगः तत्रविसर्जनीयस्येत्यनुवृत्तिं विधायेत्ययमर्थः कार्यः विसर्जनीयस्यक्वाचित् अः विसर्ग एवभवति तथा सति पूर्वप्रयोगासिद्धिरिति २ नेदंमाधवसंमतम्.

ब्दा निपातात्साधवः । यल्लक्षणेनानुत्पन्नं तत्सर्वं निपातात्सिद्धम् ।

तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ॥ ॥

तत् करः तस्करः । बृहत् पतिः बृहस्पतिः । वाचः पतिः वाचस्पतिः ॥ ३ ॥

रोऽरात्रिषु ॥ ४ ॥

अन्हो विसर्जनीयस्य पदान्ते रो भवति राज्यागणवर्जितेषु परतः । अ ः पतिः अहर्प्पतिः । अहः गणः अहर्गणः ॥ अरात्रिष्विति विशेषणात् । अहः रात्रं अहोरात्रं । अहः रूपं अहोरूपं । अहः रथन्तरं अहोरथन्तरं ॥ ४ ॥

---

१ करपतिशब्दयोः परतः चोरदेवतावाचिनोस्तच्छब्दबृहच्छब्दयोः सुडागमस्तकारलोपश्चेत्यर्थो बोद्धव्यः २. अत्रान्हइत्यत अन्ह इत्यनुवर्तते

## अतोऽत्युः ॥ ५ ॥

अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः। कः अर्थः कोर्थः ॥ ५ ॥

## हवे ॥ ६ ॥

अकारात्परस्य विसर्जनीयस्य उकारो भवति हवे परे। कः गतः। को गतः। देवः याति। देवो याति। मनः रथः मनोरथः ॥ ६ ॥

## आदवे लोपश् ॥ ७ ॥

अवर्णात्परस्य विसर्जनीयस्य लोपश् भवति अवे परे देवाः अत्र।देवा अत्र।वाताः वांति वाता वांति॥७॥

## स्वरे यत्वं वा ॥ ८ ॥

अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति। देवाः अत्र देवायत्र ॥ ८ ॥

---

१. माधवस्तुनेदं सूत्रमितिज्ञापनायैवावर्णादुत्तरस्याविसर्गस्य लोपापवादो यत्वं वा भवति स्वरपरे इति वक्तव्यमित्याह.

## भोसः ॥ ९ ॥

भोस् भगोस् अघोस् इत्येतस्य विसर्जनीयस्य लोपश् भवत्यवे परे। भोः एहि भो एहि। भगोः नमस्ते भगो नमस्ते। अघोः याहि अघो याहि ॥ ९ ॥

## नामिनो रः ॥ १० ॥

नामिनः परस्य विसर्जनीयस्य रेफो भवति अवे परे। अग्निः अत्र अग्निरत्र। पटुः यजते पटुर्यजते ॥ १० ॥

## उषसो रो बुधे ॥ ११ ॥

उषसो विसर्जनीयस्य रेफो भवति बुधे परे। उषः बुधः उषर्बुधः ॥ ११ ॥

## रेफप्रकृतिकस्य[1] खपे वा ॥ १२ ॥

रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो

---

१ रेफः प्रकृतिरुत्पत्तिकारणमितिताद्दशोविसर्गस्य खपेपरे नामिनः परस्यवारेफोभवति इतिवक्तव्यमित्यतो वार्तिकमेव वासुदेवभट्टाः.

भवति। गीः पतिः गीष्पतिः गीर्पतिः ॥ १२ ॥

र: ॥ १३ ॥

रेफसम्बन्धिनो विसर्जनीयस्य रेफो भवत्यवे परे। प्रातः अत्र प्रातरत्र। अन्तः गतः अन्तर्गतः॥१३॥

रि लोपो दीर्घश्च ॥ १४ ॥

रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः। पुनः रमते पुना रमते। शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति ॥ १४ ॥

सैषाद्धसे ॥ १५ ॥

सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश्च भवति हसे परे। सः चरति स चरति। एषः हसति एष हसति। सैषादिति संहिता। सैष दाशरथी रामः सैष राजा युधिष्ठिरः। सैष कर्णो महात्यागी सैष भीमो महाबलः। इत्यादौ पादपूरणे सन्ध्यर्थः ॥ १५ ॥ यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत्।

सेर्मां भूम्याददे सैषामित्यादीनामदुष्टता ॥ १ ॥

## क्वचिन्नामिनो लोपश् ॥ १६ ॥

नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश् भवत्यवे परे। भूमिः आददे भूम्याददे ॥ १६ ॥

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तं ॥ २ ॥

वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः। षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ३ ॥

वर्णनाशविकाराभ्यां धातोरातिशयेन यः। योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ४ ॥

॥ इति विसर्गसन्धिः ॥

# अथ षड्लिंगाः॥

अथ विभक्तिर्विभाव्यते। सा द्विधा स्यादिस्त्यादिश्च।

## विभक्त्यन्तं पदं ॥ १ ॥

तत्र स्यादिर्विभक्तिर्नाम्नो युज्यते ॥ १ ॥

## अविभक्ति नाम ॥ २ ॥

विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते। कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा इति केचित् ॥ २ ॥

## तस्मात् सि औ जस् अम् औ शस् टा॥

---

१ अथेत्यनेनैव विभक्तिसंज्ञा संधिप्रकरणकथनानन्तरं ये विधयो वक्ष्यन्ते तेषां विभक्तिसंज्ञा स्यात् सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यते इति विभक्तिशब्दावृत्त्या योजनीया २. पदं द्विविधं व्युत्पन्नमव्युत्पन्नंच तत्र च व्युत्पन्नशब्दपक्षे (आविभक्तिनाम) इत्यनेन अव्युत्पन्नपक्षे (कृत्तद्धितसमासाश्च) इत्यनेन नामसंज्ञा भवति ३ पाणिन्यादयः.

भ्यां भिस् ङे भ्यां भ्यस् ङसि भ्यां भ्यस् ङस् ओस् आम् ङि ओस् सुप् ॥ ३ ॥

तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति। तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचने देव सि इति स्थिते। इकार उच्चारणार्थः ॥ ३ ॥

स्रोर्विसर्गः ॥ ४ ॥

सकाररेफयोर्विसर्जनीयादेशो भवति अधातोरसे पदान्ते च। देवः। द्वित्वविवक्षायां देवौ। बहुत्वविवक्षायां प्रथमाबहुवचने जस् जसो जस्येत्संज्ञायां तस्य लोपः। प्रयोजनं जसीति विशेषणार्थं। देव अस् इति स्थिते दीर्घविसर्गौ देवाः।

अकाराज्जसो असुक् क्वचिद्वक्तव्यः ॥ ❋ ॥

देवासः ब्राह्मणासः। द्वितीयैकवचने देव अम् इति स्थिते ॥ ४ ॥

## अमूशसोरस्य ॥ ५ ॥

समानादुत्तरयो अमूशसोरकारस्य लोपो भवत्यधातोः । देवं । देवौ । बहुवचने देव शस् इति स्थिते शकारः शसीति विशेषणार्थः ॥ ५ ॥

## सोनःपुंसः ॥ ६ ॥

पुंलिङ्गात् समानादुत्तरस्य सकारस्य नकारादेशो भवति ॥ ६ ॥

## शसि ॥ ७ ॥

शसि परे पूर्वस्य स्वरस्य दीर्घो भवति । यदादे[1]शस्तद्भवति न तु वर्णमात्रविधौ । देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोनुबन्धः टेनेति विशेषणार्थः ॥ ७ ॥

---

१ सत्यासि अम्शसोरित्यकारलोपे च स्यान्नत्वं तथा सति शसोभावात्कुतो दीर्घ इत्यतआह ( यदादेशस्तद्वदिति ).

टेनः ॥ ८ ॥

अकारात्परष्टा इनो भवति । देवेन ॥ ८ ॥

आभ्भि ॥ ९ ॥

अकारस्य आकारादेशो भवति भकारे परे । देवाभ्यां ॥ ९ ॥

भ्यः[1] ॥ १० ॥

अकारात् परस्य भिसो भकारस्याकारादेशो भवति अ इ ए । ए ऐ ऐ । विसर्जनीयः देवैः ॥ अकारस्य भिसि छन्दस्येकारो वा वक्तव्यः ॥ * ॥ देवेभिः कर्णेभिः ॥ चतुर्थ्येकवचने देव ङे इति स्थिते ङकारो ङित्कार्य्यार्थः सर्वत्र ॥ १० ॥

ङेअक् ॥ ११ ॥

अकारात् परस्य ङे इत्येतस्यागागमो भवति । कित्वादन्ते ए अय् दीर्घः । देवाय । देवाभ्यां । पूर्वव-

1 बू च भच्चूभौ तास्मिनूभि.

त्। चतुर्थीबहुवचने देव भ्यस् इति स्थिते ॥ ११ ॥

## ए स्भि[1] बहुत्वे ॥ १२ ॥

अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति देवेभ्यः । पञ्चम्येकवचने देव ङसि इति । स्थिते ॥ १२ ॥

## ङसिरत् ॥ १३ ॥

अकारात्परो ङसिरद्भवति दीर्घः। देवात्। देवाभ्यां । देवेभ्यः। षष्ठ्येकवचने देव ङस् इति स्थिते ॥ १३ ॥

## ङस् स्य[2] ॥ १४ ॥

अकारात्परो ङस् स्य भवति देवस्य । षष्ठीद्विवचने देव ओस् इति स्थिते ॥ १४ ॥

## ओसि ॥ १५ ॥

अकारस्य ओसि परे एत्वं भवति। देवयोः ॥ १५ ॥

---

१ सूच भूच स्भौतास्मिन्नास्भि. २ अत्र "टाङसिङसामिनात्स्याः" इत्येव व्याख्यातव्यं परन्तु पृथग्योगकरणं बालबोधार्थं लाघवार्थंञ्च.

## नुडामः ॥ १६ ॥

समानात्परस्यामो नुडागमो भवति । टित्वादादौ टकार उच्चारणार्थः ॥ १६ ॥

## नामि ॥ १७ ॥

नामि परे पूर्वस्य दीर्घोभवति । देवानां । सप्तम्येकवचने देव ङि इतिस्थिते अइए । देवे । देवयोः पूर्ववत् । सप्तमीबहुवचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः एस्भिबहुत्वे ॥ १७ ॥

## क्लिात् षः सः[1] कृतस्य ॥ १८ ॥

कवर्गादिलाच्च प्रत्याहाराडुत्तरस्य केनाचित् सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु ॥ १८ ॥

---

१ सतोहिकार्य्यिणः कार्य्येण भवितव्यमिति सः षः इति निर्देष्टव्ये, विपरीतनिर्देशः सषूस इति द्विसकारकत्ववत् तथा विधानार्थः.

## आमन्त्रणे[1] सिर्द्धिः ॥ १९ ॥

आमन्त्रणमभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्द्धिसंज्ञो भवति ॥ १९ ॥

## समानाद्धेर्लोपोऽधातोः ॥ २० ॥

समानादुत्तरस्य धेर्लोपो भवत्यधातोः । आभिमुख्याभिव्यक्तये हे शब्दस्य प्राक् प्रयोगः । हे देव । हे देवौ । हे देवाः । एवं घटपटस्तंभकुम्भादयोप्यकारान्ताः पुंलिङ्गाः ॥ अकारान्तानामपि सर्वादीनां तु विशेषः ॥

सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम सिम नेम एक पूर्व पर

---

१ ननु प्रथमापि न सम्बोधने विधीयते "लिंगार्थे प्रथमा" इति विधास्यमानत्वात् सम्बोधनस्य लिंगार्थातिरिक्तत्वाच्च यत्त्वामंत्रणेचेति वक्ष्यति तन्न सूत्रं सूत्रेष्वसत्वात्एवं तर्हियोगे विभागः कर्त्तव्यः "आमन्त्रणेसिर्द्धिः" इत्यत्र "आमन्त्रणे" इत्येकः तत्र प्रथमानुवर्तनात् आमन्त्रणेर्थेतिप्रथमाविभक्तिर्भवति "सिर्द्धिः" इत्यपरः तत्रामंत्रणे प्रथमाचेत्यनुवर्तते तथाचामंत्रणेयाप्रथमातस्यासिर्द्धिसंज्ञोभवति इत्यर्थः;

अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मद् अस्मद् भवतु एते सर्वादयस्त्रिलिंगाः[1]। तत्र पुलिङ्गत्वेन रूपं ज्ञेयम् ॥ २० ॥

## जसी ॥ २१ ॥

सर्व्वादे[2]रकारान्तात्परो जस ई भवति । सर्व्वः । सर्व्वौ । सर्व्वे । सर्वं । सर्व्वौ । सर्व्वान् ॥ २१ ॥

## षृ[3]नों णोऽनन्ते ॥ २२ ॥

षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्य न भवति । सर्वानित्यादौ ॥ २२ ॥

---

१ "नाममात्रग्रहणेलिंगविशिष्टस्यापिग्रहणमिति नयेन लिंगत्रयेप्येते सर्वादिकार्य्यभाजोभवन्तीति तात्पर्य्यार्थः २ सर्वादेःस्मडित्यत एतदनुवर्तते ३ ननु हरेर्नेत्रमित्यादौ कुतो न णत्वं इति चेन्न "धातोर्नामिनः" इति निर्देशेन एकपद एवास्य स्वीकारात् अथैवं रामनाम इत्यत्र कुतो न णत्वं समासेनैकपदत्वात् इति चेन्न गर्गनडेत्यादि निर्देशेन समासेनैकपदत्वेनणत्वम्.

## अवकुप्वन्तरेपि ॥ २३ ॥

अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण । सर्वाभ्यां । सर्वैः ॥ २३ ॥

## सर्वादेः स्मट् ॥ २४ ॥

सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । सर्वस्मै सर्वाभ्यां । सर्वेभ्यः । पञ्चम्येकवचने सर्व ङसि इति स्थिते ॥ २४ ॥

## अतः ॥ २५ ॥

सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति । सर्वस्मात् । सर्वाभ्यां । सर्वेभ्यः । सर्वस्य । सर्वयोः ॥ २५ ॥

## सुडामः ॥ २६ ॥

सर्वादेः परस्यामः सुडागमो भवति सर्वेषां ।

## ङि स्मिन् ॥ २७ ॥

सर्वादेरकारान्तात्परो ङि स्मिन् भवति । सर्वस्मिन् । सर्वयोः । सर्वेषु ॥ एवं विश्वादीनामेक[1]शब्दपर्यन्तानां रूपं ज्ञेयं डतरडतमौ[2] विहाय तौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः । पूर्वादीनां तु नवानां जसि ईकारो वा वक्तव्यः पूर्वे । पूर्वाः । परे । पराः । इत्यादि ॥

ङसिङ्योः स्मात् स्मिनौ वा वक्तव्यौ ॥ पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे इत्यादि । प्रथमचरमतया यडलपार्द्धकतिपयनेमानां जसीकारो वा वक्तव्यः ॥ प्रथमे प्रथमाः । चरमे । चरमाः । शेषं । देववत् ।

तयायडौ प्रत्ययौ ॥

---

१ विश्वैकशब्दाद्यन्तावयवानां उभयप्रभृतीनामपि सर्वादित्वात्सर्वशब्दवद्रूपाणि ज्ञातव्यानीत्यर्थः २ नन्वत्रपठितयोर्डतरडतमयोः प्रत्ययस्यच केवलस्य प्रयोगाभावात् सर्वादिकार्य्यस्य प्रयोगशरणात् कथं तद्वद्रूपंस्यादित्याशंक्याह " डतर" इति.

तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यं ॥ * ॥ द्वितीयस्मै। द्वितीयाय। द्वितीयस्मात्। द्वितीयात्। द्वितीयास्मिन्। द्वितीये। एवं तृतीयः। उभशब्दो नित्यं[1] द्विवचनान्तः। उभौ। उभौ। उभाभ्यां उभाभ्यां उभाभ्यां उभयोः उभयोः। उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः। उभयः। उभये। उभयं। उभयान्। उभयेन। उभयैः। उभयस्मै। उभयेभ्यः। इत्यादि ॥ २७ ॥

## अकरांतः पुलिंगो मासशब्दः ॥

# मासस्याल्लोपो वा ॥ २८ ॥

मासशब्दस्याकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ २८ ॥

---

१ नित्यपदेनाबन्तोप्यापा सह दीर्घे यन्मध्येपातितस्तद्ग्रहणेनगृह्यन्ते इत्यापोप्युभग्रहणेनैवग्रहणात्तथा स्वार्थिकानामप्यर्थभेदात् प्रकृत्यन्तरभूतत्वेन उभकावितिकप्रत्ययान्तो द्विवचनान्तत्वं न व्यभिचरति

## हसेपः सेर्लोपः ॥ २९ ॥

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । माः मासः मासौ मासौ मासः मासाः । मासं मासं मासौ मासौ मासः मासान् । मासा मासेन माभ्यां मासाभ्यां माभिः मासैः । मासे मासाय माभ्यां मासाभ्यां माभ्यः मासेभ्यः । मासः मासात् माभ्यां मासाभ्यां माभ्यः मासेभ्यः । मासः मासस्य मासोः मासयोः मासां मासानां । मासि मासे मासोः मासयोः मास्सु मासेषु । हे माः हे मासः हे मासौ हे मासौ हे मासः हे मासाः । आकारान्तः पुंलिङ्गः सोमपा शब्दः सोमपाः सोमपौ सोमपाः । अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हे सोमपाः। सोमपां सोमपौ । बहुवचने सोमपा अस् इति स्थिते

## आतो[1] धातोर्लोपः ॥ ३० ॥

धातुसम्बन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे। सोमपः। सोमपा सोमपाभ्यां सोमपाभिः। सोमपे सोमपाभ्यां सोमपाभ्यः। सोमपः सोमपाभ्यां सोमपाभ्यः। सोमपः सामपोः सोमपाम्। सोमपि सोमपोः सोमपासु। एवं कीलालपा शंखध्मा प्रभृतयः॥ ३०॥ इकारान्तः पुंलिङ्गो हरिशब्दः। प्रथमैकवचने हरिः॥

## औ यू ॥ ३१ ॥

इकारान्तो[2]दुकारान्ताच्च पर औ यू आपद्यते। (ई ऊ भवतः)। हरी॥ ३१॥

---

१ आकारमात्रस्य धातोः शसादौ क्वचिदप्यभावात् आतोधातोरिति व्यधिकरणषष्ठ्योः तत्र आत इति तुस्थानषष्ठी धातोरित्यवयवषष्ठी तेनायमर्थः धातोरवयवस्यातो लोपः अतएवात्रार्थवद्ग्रहणपरिभाषापि न प्रवर्तते इति मत्वाह धातुसम्बान्धिनइति. २ अत्रनाम्न इदुद्भ्यामित्यनुवृत्तेः नाम्न इकारोकाराभ्यामित्यर्थः स्यात् योहिनाम्न इकारोकाराभ्यां परः अर्थादिकारान्तादुकारान्ताच्च पर इति मत्वाह.

## एओ जसि ॥ ३२ ॥

इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । हरयः ॥ ३२ ॥

## घौ ॥ ३३ ॥

इकारान्तस्य[१] उकारान्तस्य च घिविषये एकार ओकारश्च भवति । हे हरे हे हरी हे हरयः हरिं हरी हरीन् ॥ ३३ ॥

## टा नास्त्रियाम् ॥ ३४ ॥

इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियां[२] विषये । हरिणा हरिभ्यां हरिभिः ॥ ३४ ॥

## ङिति ॥ ३५ ॥

इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति । हरये हरिभ्यां हरिभ्यः ॥ ३५ ॥

---

१ अत्रेदुद्भ्यामित्यनुवर्तमानं पंचम्यन्तमप्यर्थात् षष्ठ्यंतं स्यादितिमत्वाह इकारान्तस्येति. २ अत्रासिनेतिनिर्देशात् अस्त्रियामिति प्रश्लिष्टो नञस्ति इति मत्वाह " अस्त्रियाम् " इति.

## ङस्य ॥ ३६ ॥

एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः हरिभ्यां हरिभ्यः । हरेः हर्य्योः हरीणां ॥३६॥

## ङेरौ डित् ॥ ३७ ॥

इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् ॥ ३७ ॥

## डिति टेः ॥ ३८ ॥

डिति परे टेर्लोपो भवति । हरौ हर्य्योः हरिषु । एवमग्निगिरिरविकविप्रभृतयः एतैरेव सूत्रैः सिध्यंति । उकारान्तांश्च[1] विष्णुवायुभानुप्रभृतयः । एतैरेव सूत्रैः सिध्यन्ति । भानुः भानू भानवः । भानुं भानू भानून् । भानुना भानुभ्यां भानुभिः । भानवे भानुभ्यां भानुभ्यः । भानोः भानुभ्यां भानुभ्यः । भानोः भान्वोः भानूनां । भानौ भान्वोः

---

1 चकारो हि उकारान्तत्वेपि एतामुक्तप्रक्रियांसमुच्चिनोति.

भानुषु। हे भानो इत्यादि॥ ३८॥ सखिशब्दस्य भेदः[1]॥

## सेर्डाधेः[2]॥ ३९॥

सखिशब्दात्परस्य सेरधेः डा भवति स च डित् डित्वाट्टिलोपः। सखा अधेरिति विशेषणादेकारो धिविषये। हे सखे॥ ३९॥

## ऐ सख्युः॥ ४०॥

सखिशब्दस्यैकारो भवति पञ्चसु परेषु। षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः॥ ४०॥

## द्विवचनस्यात्वं[3] छन्दसि॥ ४१॥

---

१ भेदः प्रक्रियाविशेषः २. अत्रच ऐसख्युरित्यतः सख्युरिति षष्ठ्यन्तमनुवर्तमानं सेरित्यनेन संबन्धात् सखिशब्दार्थस्यैकत्ववाच्ये विहितस्य सेरित्यर्थः प्रत्याययति इति मत्वाह सखिशब्दादिति

३ अस्यात्वं छन्दसि वाच्यमित्यर्थः। ननु चात्रौ प्रथमोद्वितीयो वा इति संशय इति चेन्न सेर्द्विवचनं द्विवचनासिःइत्यर्थात् प्रथम एव संदेहाभावात् सेरिति षष्ठ्यंतस्य "क्वचिदमाद्यन्तस्यपरत्वम्" इति परत्वम्

द्विवचनस्य औ आ भवति वेदे। सखायौ सखाया सखायः। सखायं सखायौ सखीन्॥ ४१॥

सखिपत्योरीक्[1]॥ ४२॥

सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः। दीर्घत्वान्न ना। सख्या। आगमजमनित्यं। सखिना पतिना सखिभ्यां सखिभिः सख्ये सखिभ्यां सखिभ्यः

ऋङ्ङे॥ ४३॥

सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे परे स च डित्। सख्युः सखिभ्यां सखिभ्यः। सख्युः सख्योः सखीनां। सप्तम्येकवचने ङेरौ डित्यौकारे कृते सखिपतिशब्दयोरीगागमो भ-

---

अत्रच "एटाङ्न्योः" इत्यत टाङी अनुवर्त्तेते वक्ष्यमाणंच सूत्रपाठे ङे इत्येतत्सूत्रं चतुर्थ्येकवचने ईगागमं शास्ति तदप्याविशेषादन्तर्णीयाह "टाङेङिषु" इति २. अत्रायमाशयः यदि ह्रस्व एवेकक्रियेत तर्हि सखि इटा इतिस्थिते सवर्णदीर्घं बाधित्वान्तरंगत्वाट्टानास्त्रियामितिना भावः प्राप्नोति ईकिपुनः सत्यसतिवा सवर्णदीर्घे दीर्घत्वान्नास्तिनादेशः

वति । सख्यौ सख्योः सखिषु पतिशब्दस्य प्रथमा द्वितीययोर्हरिशब्दवत् प्रक्रिया । तृतीयादौ तु सखिशब्दवत् प्रक्रिया । पतिरसमास एव सखिवद्वक्तव्यः । ततः समासान्तस्य नादयो भवन्ति । प्रजापतिना प्रजापतये इत्यादि ॥ ४३ ॥

द्विशब्दो नित्यं द्विवचनान्तः । द्वि औ इति स्थिते॥

## त्यदादेष्टेरः स्यादौ ॥ ४४ ॥

त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ द्वौ । द्वाभ्यां द्वाभ्यां द्वाभ्यां । द्वयोः द्वयो । त्यदादीनां धेरभावः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रि जस् इति स्थिते । त्रयः त्रीन् त्रिभिः त्रिभ्यः त्रिभ्यः ॥ ४४ ॥

## त्रेरयङ् ॥ ४५ ॥

त्रिशब्दस्यायङादेशो भवति नामि परे । ङिदन्तस्य वक्तव्यः । त्रयाणां त्रिषु ॥ कतिशब्दो नित्यं बहुवचनान्तः ।

जस्शसोर्लुक् ॥ ❀ ॥

[1]कतिशब्दाज्जस्शसोर्लुग्वक्तव्यः । लुकिनतन्निमित्तं । कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनां कतिषु । त्रिषु लिंगेषु चायं सरूपः ॥ ४५ ॥

ईकारान्तः पुंलिंगः सुश्रीशब्दः ।

## [2]य्वोर्धातोरियुवौ स्वरे ॥ ४६ ॥

धातोरीका[3]रोकारयोरियुवौ भवतः स्वरे परे । सुश्रीः सुश्रियौ सुश्रियः । हे सुश्रीः हे सुश्रियौ हे सुश्रियः । सुश्रयं सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्यां सुश्रीभिः । सुश्रिये सुश्रीभ्यां सुश्रीभ्यः । सुश्रियः सुश्रीभ्यां सुश्रीभ्यः । सुश्रियः सुश्रियोः सुश्रियां । सुश्रियि सुश्रियोः सुश्रीषु ॥ तथैव सुधीशब्दः ।

---

१ का संख्या येषां ते कति च शब्दाश्च तेषांसमाहारस्तस्मात्

२ ईच ऊच यू तयोर्य्वोः ३. धात्ववयवेकारोकारयोरित्यर्थः

ऊकारान्तः पुंलिङ्गः स्वयम्भूशब्दः। स्वयंभूः स्वयंभुवौ स्वयंभुवः। स्वयंभुवम् स्वयंभुवौ स्वयंभुवः। स्वयंभुवा स्वयंभूभ्यां स्वयंभूभिः। स्वयंभुवे स्वयंभूभ्यां स्वयंभूभ्यः। स्वयंभुवः स्वयंभूभ्यां स्वयंभूभ्यः। स्वयंभुवः स्वयंभुवोः स्वयंभुवां। स्वयंभुवि स्वयंभुवोः स्वयंभूषु ॥ ४६ ॥

सेनानीशब्दस्याविशेषो हसादौ। स्वरादौ तु विशेषः। सेनानी औ इति स्थिते।

## य्वौ वा ॥ ४७ ॥

धातोरवयवसंयोगपूर्वो यस्मादीकारादूकारान्नास्ति तदन्तस्यानेकस्वरस्य ईकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे। वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा। वाग्रहणादियं विवक्षा। सेनानीः सेनान्यौ सेनान्यः। हे सेनानीः हे सेनान्यौ हे सेनान्यः। सेनान्यं से-

नान्यौ सेनान्यः सेनान्या सेनानीभ्यां सेनानीभिः सेनान्ये सेनानीभ्यां सेनानीभ्यः । सेनान्यः सेनानीभ्यां सेनानीभ्यः। सेनान्यः सेनान्योः । सेनान्यादीनां वामो नुट् वक्तव्यः ॥ * ॥ सेनान्यां सेनानीनां ॥ ४७ ॥

## आम्[1] ङेः ॥ ४८ ॥

आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति। सेनान्यां सेनान्योः सेनानीषु। वातप्रमीशब्दस्य भेदः[2]। वातप्रमीः वातप्रम्यौ वातप्रम्यः। हे वातप्रमीः हे वातप्रम्यौ हे वातप्रम्यः। वातप्रमीं[3] वातप्रम्यौ वातप्रमीन्। वातप्रम्या वातप्रमीभ्यां वातप्रमीभिः। वातप्रम्ये वातप्रमीभ्यां वातप्रमी-

---

१ अत्रनियश्चेत्यनुवर्त्य आबन्तादीबन्तान्नीशब्दादिति व्याख्येयम्

२ अत्रापि भेदः प्रक्रियाविशेषोवगन्तव्यः

३ तथाच कारिकामाहुः अमि वातप्रमीमाहुः शासि वातप्रमीनिति ङौ तु वातप्रमीत्येतत् शेषं ग्रामणिवन्मतम् ॥ १ ॥

भ्यः। वातप्रम्यः वातप्रमीभ्यां वातप्रमीभ्यः। वातप्रम्यः वातप्रम्योः। आमि नुट्। वातप्रमीनां ङौ तु सवर्णदीर्घः। वातप्रमी वातप्रम्योः वातप्रमीषु। एवं ग्रामणीप्रभृतयः सेनानीवत्। ऊकारान्ताश्च यवलूप्रभृतयः॥ ४८॥

ऋकारान्तः पुँल्लिङ्गः पितृशब्दः।

## सेरा॥ ५९॥

ऋकारान्तात्परस्य सेरा भवति स च डित्। डित्वाट्टेर्लोपः। पिता॥ ४९॥

## पंचसु॥ ५०॥

ऋकारोऽर्भवति पञ्चसु परेषु स च डित्। हे पितः हे पितरौ हे पितरः। पितरं पितरौ पितॄन्। पित्रा पितृभ्यां पितृभिः। पित्रे पितृभ्यां पितृभ्यः। पितुः पितृभ्यां पितृभ्यः। पितुः पित्रोः पितॄणाम्॥ ५०॥

## ङौ ॥ ५१ ॥

ऋकारस्यार्भवति ङौ परे । पितरि पित्रोः पितृषु । एवं जामातृभ्रात्रादयः । नृशब्दः । ना नरौ नरः । नरं नरौ नॄन् । त्रा नृभ्यां नृभिः । त्रे नृभ्यां नृभ्यः । नुः नृभ्यां नृभ्यः । नुः त्रोः ॥५१॥

## नुर्वा नामि दीर्घः ॥ ५२ ॥

नृशब्दस्य नामि परे वा दीर्घो भवति । नृणां नॄणां । नरि न्रोः नृषु । हे नः हे नरौ हे नरः । ॥ ५२ ॥ कर्तृशब्दस्य पंचसु विशेषः ॥

## स्तुएर् ॥ ५३ ॥

सकारतृप्रत्ययसम्बन्धिन ऋकारस्यार्भवति पंचसु परेषु । कर्तृ सि इति स्थिते । यदादेशस्तद्वद्भवति । सेरा । डित्वाट्टेर्लोपः । कर्ता कर्तारौ कर्तारः । हे कर्तः । हे कर्तारौ हे कर्तारः । कर्तारं कर्तारौ कर्तॄन् । कर्त्रा कर्तृभ्यां कर्तृभिः ।

कर्त्रे कर्तृभ्यां कर्तृभ्यः । कर्तुः कर्तृभ्यां कर्तृभ्यः ।
कर्तुः कर्त्रोः कर्तॄणां । कर्तरि कर्त्रोः कर्तृषु ।
एवं नप्तृहोतृप्रशास्तृप्रभृतयः । उकारान्तस्य क्रोष्टुशब्दस्य भेदः ।

उकारान्तस्यापि क्रोष्टुशब्दस्य पंचस्वाधिषु तृप्रत्ययान्तस्येव रूपं वक्तव्यं ॥ ❋ ॥

क्रोष्टा क्रोष्टारौ क्रोष्टारः । क्रोष्टारं क्रोष्टारौ । शसि तृप्रत्ययान्तवद्भावाभावात् क्रोष्टून् ।

वृतीयादौ स्वरादौ तृप्रत्ययान्तता
वा वक्तव्या ॥ ❋ ॥

क्रोष्ट्रा क्रोष्टुना क्रोष्टुभ्यां क्रोष्टुभिः । क्रोष्ट्रे क्रोष्टवे क्रोष्टुभ्यां क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः क्रोष्टुभ्यां क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः क्रोष्ट्रोः क्रोष्ट्वो क्रोष्टूनां । नुडागमे कृते हसादित्वात्तृज्वद्भावो नास्ति । कृताकृतप्रसंगो यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । क्रोष्टरि क्रोष्टौ क्रोष्ट्रो क्रोष्ट्वोः

क्रोष्टुषु । ऋकारान्ता ऌकारान्ता एकारान्ताश्चा-प्रसिद्धाः[1] ॥ ५३ ॥

ऐकारान्तः पुँलिंगः सुरैशब्दः ।

## रैस्भे[2] ॥ ५४ ॥

रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः । सुराः । स्वरादौ सर्वत्रायादेशः । सुरायौ सुरायः हे सुराः हे सुरायौ हे सुरायः । सुरायं सुरायौ सुरायः । सुराया सुराभ्यां सुराभिरित्यादि ॥ ५४ ॥

ओकारान्तः पुँलिंगो गोशब्दः ।

## ओरौ ॥ ५५ ॥

ओकारस्यौकारादेशो भवति पंचसु परेषु । गौः गावौ गावः । हे गौः हे गावौ हे गावः ॥ ५५ ॥

---

१ अप्रसिद्धत्वम् वेदपुराणादौ अविहितत्वात् तथात्र लेखाभावः
२ एतदविभक्तिको निर्देशः

## आमृशासि ॥ ५६ ॥

ओकारस्यात्वं भवति अमि शसि च परे। गां गावौ गाः। गवा गोभ्यां गोभिः। गवे गोभ्यां गोभ्यः। ङसीत्यकारलोपः। गोः गोभ्यां गोभ्यः। गोः गवोः गवां। गवि गवोः गोषु। एवं सुद्योशब्दः॥ ग्लौशब्दस्य हसादावविशेषः स्वरादावावादेशः॥ ग्लौः[1] ग्लावौ ग्लावः। ग्लावं ग्लावौ ग्लावः। ग्लावा ग्लौभ्यामित्यादि॥ ५६ ॥

॥ इति स्वरांताः पुंलिंगाः ॥

## अथ स्वरान्ताः स्त्रीलिंगाः प्रदर्श्यन्ते॥

तत्राबन्तो गंगाशब्दः।

## आबतः स्त्रियाम्॥ १ ॥

आकारान्तान्नाम्नःस्त्रियां वर्तमानादाप्प्रत्ययोभवति

---

१ ग्लौः मृगांकः कलानिधिरित्यमरः

## आप[1]ः ॥ २ ॥

आबन्तात्परस्य सेर्लोपो भवति । गङ्गा ॥ २ ॥

## औ[2] ॥ ३ ॥

आबन्तात्परऔ ईकारमापद्यते।अ इ ए। गंगे गंगाः।

## धिरि[3]ः ॥ ४ ॥

आबन्तात्परो धिरिर्भवति ! हे गंगे ॥ ४ ॥

## अम्बादीनां धौ ऱ्हस्वः ॥ ५ ॥

आम्बादीनां धौ परे ऱ्हस्वो भवति । हे अम्ब हे अक्क हे अल्ल ।

असंयुक्तानां डलकवतीनां प्रतिषेधो वाच्यः॥ ॥

हे अम्बाडे हे अम्बाले हे आम्बिके । इत्यादौ ऱ्हस्वो न भवति । गंगां गंगे गंगाः ॥ ५ ॥

---

१ अत्र आ, आप, इति छेदः कर्तव्यः तेन “ अतिगंगः ” इत्यादौनातिप्रसंगः २ धिरिरित्यत इ अनुवर्तनीयम्. ३ दीर्घविधानमौ इति सुत्रेनुवृत्यर्थम् वस्तुतस्तु ह्रस्व एव युक्तः

## टौसोरे ॥ ६ ॥

आबन्तस्य टौसोः परयोरेत्वं भवति । अयादेशः । गंगया गंगाभ्यां गंगाभिः ॥ ६ ॥

## ङितां यट् ॥ ७ ॥

आबन्तात्परेषां ङे ङसि ङस् ङि इत्येतेषां यडागमो भवति । टकारः स्थान[1]नियमार्थः । गङ्गायै गंगाभ्यां गंगाभ्यः । गंगायाः गंगाभ्यां गंगाभ्यः । गंगायाः गंगयोः ।

आबन्तादीबन्तादामो नुट् वक्तव्यः ॥ ❀ ॥ गंगानाम् । आम्[2] ङेः । गंगायां गंगयोः गंगासु । एवं श्रद्धामेधाशालामालाहेलादोलाप्रभृतयः । सर्वादीनां तु ङित्सु विशेषः ॥ ७ ॥

---

१ स्थानस्य नियमोवश्यंभावः सोऽर्थो यस्यासौ सति हि टकारे टित्किताबाद्यन्तयोरित्यागामिनः आदिरेवायमागमो भवति इत्येवं देशोनियम्यत इत्यर्थः २ अनेन आबन्तात् ङेरामादेश इति शेषः

## यटोऽच्च ॥ ८ ॥

आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति। सर्वस्यै सर्वाभ्यां सर्वाभ्यः। सर्वस्याः सर्वाभ्यां सर्वाभ्यः। सर्वस्याः सर्वयोः सर्वासां। सर्वस्यां सर्वयोः सर्वासु। आकारान्तो जराशब्दः।

जरायाः स्वरादौ जरस् वा वक्तव्यः ॥ ॥

जरा जरसौ जरे जरसः जराः। जरसं जरां जरसौ जरे जरसः जराः। जरसा जरया जराभ्यां जराभिः। जरसे जरायै जराभ्यां जराभ्यः। जरसः जरायाः जराभ्यां जराभ्यः। जरसः जरायाः जरसोः जरयोः जरसां जराणां। जरसि जरायां जरसोः जरयोः जरासु। हे जरे हे जरसौ हे जरे हे जरसः हे जराः। इकारान्तः स्त्रीलिंगो बुद्धिशब्दः। तस्य च प्रथमाद्वितीययोः हरिशब्दवत् प्रक्रिया।

बुद्धिः बुद्धी बुद्धयः । बुद्धिं बुद्धी बुद्धीः । स्त्रीत्वाच्छसो नत्वाभावः । बुद्ध्या बुद्धिभ्यां बुद्धिभिः ॥८॥

## इदुद्भ्याम्[1] ॥ ९ ॥

स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङिता वचनानां वा अडागमो भवति । बुद्ध्यै बुद्धये बुद्धिभ्यां बुद्धिभ्यः । बुद्ध्याः बुद्धेः बुद्धिभ्यां बुद्धिभ्यः । बुद्ध्याः बुद्धेः बुद्ध्योः बुद्धीनाम् ॥ ९ ॥

## स्त्रियांयोः[2] ॥ १० ॥

इश्च उश्च यू तस्मात् इवर्णान्तादुवर्णान्ताच्च परस्य ङेरामादेशो भवति । बुद्ध्यां । अडागमाभावे आमोऽप्यभावः । बुद्धौ बुद्ध्योः बुद्धिषु । एवं मतिभूतिविभूतिधृतिरुचिकृतिसिद्धिशान्तिभ्रान्तिभ्रांत्यालिशक्तिप्रभृतयः । एवं धेनुतनुरज्जु-

---

१ इदुन्मात्रस्य स्त्रियामप्रवृत्तेर्ङितामसंभवाच्च तदन्ताभ्यामित्यर्थः

२ द्वैकत्वेन निर्देशः सूत्रे तु छांदसं पुंस्त्वम्.

प्रभृतयः स्त्रीलिंगाः । धेनुः धेनू धेनवः । धेनुं धेनू धेनूः । धेन्वा धेनुभ्यां धेनुभिः । धेन्वै धेनवे धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः धेन्वोः धेनूनां । धेन्वां धेनौ धेन्वोः धेनुषु ॥ १० ॥

ईकारान्तः स्त्रीलिंगो नदीशब्दः ।

## हसेपस्सेर्लोपः ॥ ११ ॥

हसन्तादबिन्ताच्च परस्य सेर्लोपो भवति । नदी नद्यौ नद्यः ॥ ११ ॥

## धौ ह्रस्वः ॥ १२ ॥

इवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि हे नद्यौ हे नद्यः । नदीम् नद्यौ नदीः । नद्या नदीभ्यां नदीभिः ॥ १२ ॥

---

१ अत्र हसेपमात्रग्रहणात् सिर्न भवति इति सामर्थ्यात्तदन्तग्रहण मित्याह ॥ हसान्तादीबंतच्चेति.

## ङितामट् ॥ १३ ॥

स्त्रियामीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति ॥ नद्यै नदीभ्यां नदीभ्यः। नद्याः नदीभ्यां नदीभ्यः। नद्याः नद्योः नदीनां। नद्यां नद्योः नदीषु। एवं गौरीसरस्वतीब्रह्माणीकुमारीकिशोरीकलभीपार्वतीभवानीप्रभृतयः॥ लक्ष्मीशब्दस्येबन्तत्वाभावात् सेर्लोपो नास्ति। लक्ष्मीःलक्ष्म्यौ लक्ष्म्यः। शेषं नदीवत्। हे लक्ष्मि। स्त्रीशब्दस्य ईबन्तत्वात्सेर्लोपोऽस्ति। स्त्री ॥ १३ ॥

## स्त्रीभ्रुवोः[1] ॥ १४ ॥

स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे। स्त्रियौ स्त्रियः। हे स्त्रि हे स्त्रियौ हे स्त्रियः॥ १४ ॥

## वामुशसि[2] ॥ १५ ॥

१ स्त्रोधांतोरियुवौस्वरे इत्यत्रधातोर्ग्रहणात् मत्रतदभावात् नूतन सूत्रारंभः. २ अमि शसि च परे स्त्रीशब्दस्य वा इयादेशो वक्तव्य इत्यर्थः। इदं वार्तिकं लेखकैर्भ्रमात्सूत्ररीत्यालिखितम्.

स्त्रीशब्दस्य आमि शसि च परे वा इयादेशो भवति। स्त्रियं स्त्रीं स्त्रियौ स्त्रीः स्त्रियः। स्त्रिया स्त्रीभ्यां स्त्रीभिः। स्त्रीषु। शेषं नदीवत्। श्रीः श्रियौ श्रियः। श्रियं श्रियौ श्रियः। श्रिया श्रीभ्यां श्रीभिः ॥ १५ ॥

## वेयुवः ॥ १६ ॥

इयुवन्तात् स्त्रियां वर्त्तमानात्[1] ङितां वचनानां वाऽऽगमो भवति स्त्रियास्तु नित्यं। श्रियै श्रिये श्रीभ्यां श्रीभ्यः। श्रियः श्रियाः श्रीभ्यां श्रीभ्यः। श्रियः श्रियाः श्रियोः।

श्रियादीनांवामो[2] नुट् वक्तव्यः ॥ * ॥

श्रियां श्रीणां। ङौ परेऽडागमाभावे आमोप्यभावः। श्रियां श्रियि श्रियोः श्रीषु। हे श्रीः। एवं ह्रीधीप्रभृतयोप्यनीबन्ताः। एवं भ्रूशब्दो भ्रूशब्दवत् वधू-

१. नित्यस्त्रीत्ववृत्तोरित्यर्थः २. श्रीप्रकाराणां नित्यस्त्रीत्वाना संबंधिन आमोवा नुट् स्यादिति वक्तव्यार्थः

जम्ब्वादीनां नदीशब्दवत् । वधूः वध्वौ वध्वः। वधूं वध्वौ वधूः। जम्बूः जम्ब्वौ जम्ब्वः । हे जम्बु हे जम्ब्वौ हे जम्ब्वः । ऋकारान्तो मातृशब्दः । माता मातरौ मातरः । मातरं मातरौ मातॄः । शसीति दीर्घत्वम् । शेषं पितृवत् । रैशब्दः सुरैशब्दवत् । नौशब्दो ग्लौशब्दवत् । गोशब्दस्तु पूर्ववत् ॥१६॥

॥ इति स्वरांताः स्त्रीलिंगाः ॥

## अथ स्वरान्ता नपुंसकलिंगाः प्रदर्श्यन्ते।

अकारान्तो नपुंसकः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने ।

### अतोऽम् ॥ १ ॥

अकारान्तान्नपुंसकलिंगात्परयोः स्यमोः[1] अम् भवति अधौ । अमोऽम्ग्रहणं लुग्व्यावृत्त्यर्थं । अम्शसोरस्य । कुलं ॥ १ ॥

---

१. अप्रश्लिष्टेपि निर्देशे अमेवादेशो नमकारमात्रं तथा सति लाघवासंदेहार्थमत इति निर्देश्यं स्यादत आहस्यमोरिति.

## ईमौ ॥ २ ॥

नपुंसकलिंगात्परं औ ईकारमापद्यते । कुले ॥ २ ॥

## जश्शसोः शिः ॥ ३ ॥

नपुंसकलिंगात्परयोर्जस्शसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ ३ ॥

गुरुः शिश्च सर्वस्य वक्तव्यः ॥ * ॥

## नुमयमः ॥ ४ ॥

नपुंसकस्य नुमागमो भवति शौ परे यमप्रत्याहारान्तस्य न भवति ॥ ४ ॥

मिदन्त्यात् स्वरात् परो वक्तव्यः ॥ * ॥

## नोपधायाः ॥ ५ ॥

नान्तस्य[1]ोपधाया दीर्घो भवति शौ परे धिवर्ज्जितेषु पञ्चसु नामि च नत्वीति । कुलानि । हे कुल हे

---

1 अत्रनकारमात्रस्योपधा न संभवतीति सामर्थ्यात्तदन्तग्रहणमित्याह नान्तस्येति.

कुले हे कुलानि । पुनरपि[1] । कुलं कुले कुलानि । शेषं देववत् । एवं मूलफलपत्रपुष्पकुटुम्बादयः[2] ॥५॥

## श्त्वन्यादेः ॥ ६ ॥

अन्यादेर्गणात् परयोः स्यमोः श्तुर्भवति शकारः शित्कार्यार्थः । उकार उच्चारणार्थः ॥ ६ ॥

## वावसाने ॥ ७ ॥

अवसाने वर्त्तमानानां झसानां जबा भवन्ति चपा वा । अन्यत् अन्यद् अन्ये अन्यानि । पुनरपि । अन्यत् अन्यद् अन्ये अन्यानि । अन्यतरत् अन्यतरद् अन्यतरे अन्यतराणि ॥ २ ॥ इतरत् इतरद् इतरे इतराणि ॥ २ ॥ कतरत् कतरद् कतरे कतराणि ॥ २ ॥ कतमत् कतमद् कतमे कतमानि ॥ २ ॥ शेषं सर्वशब्दवत् ॥ एते चान्यादयः ॥ ७ ॥

---

१ अविशेषात् द्वितीयापि प्रथमावत् इत्यर्थः २ आदिशब्दस्य प्रकारार्थत्वान्मूलादिप्रकारा क्लीबार्थाः कुलवत्साध्या इत्यर्थः.

इकारान्तोऽस्थिशब्दः ।

## नपुंसकात्स्यमोर्लुक् ॥ ८ ॥

नपुंसकलिंगात् परयोः स्यमोर्लुग् भवति । अस्थि ॥ ८ ॥

## य्वृणाम् ॥ ९ ॥

इश्च उश्च ऋश्च य्वः तेषां य्वृणां । नपुंसके धौ वा गुणो वक्तव्यः ॥ * ॥ हे अस्थि हे अस्थे हे अस्थिनी हे अस्थीनि ॥ ९ ॥

उक्तं हि ।

सम्बोधने[3] तू[4]शन[2]सस्त्रि[1]रूपं सान्तं[5] तथा[6] नान्त[7]मथाप्यर्दन्तं[8] । माध्यन्दिनि[9]र्वष्टि[10] गुणं[14] त्विगंते[11][12] नपुंसके[13] व्याघ्रपदां वरिष्ठः ॥ १ ॥

## नामिनःस्वरे ॥ १० ॥

---

१ इ उ ऋ वर्णान्तानां क्लीबे धिविषये वा गुणः ए ओ अरिति स्यादिति वक्तव्यार्थः.

२ अत्रस्याद्यधिकाराद्ध्यत्रेत्यादौ पदान्तरस्थे स्वरे नुम् न.

नाम्यन्तस्य नपुंसकलिंगस्य नुमागमो भवति स्वरे परे । ईमौ ॥ अस्थिनी ॥ १० ॥

## अच्चास्थ्नां शसादौ ॥ ११ ॥

अस्थ्यादीनां नुमागमो भवति ईकारस्य चाकारो भवति शसादौ स्वरे परे ॥ ११ ॥

## अल्लोपःस्वरे अम्वयुक्ताच्छसादौ ॥१२॥

नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे मकारवकारान्तसंयोगादुत्तरस्य न भवति । अस्थ्ना अस्थिभ्यां अस्थिभिः । अस्थ्ने अस्थिभ्यां अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नां ॥ १२ ॥

## वेङ्योः ॥ १३ ॥

ईङ्योः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि अस्थनि । एवं दधिसक्थिअक्षिशब्दाः । दध्ना दधिभ्यां दधिभिः । सक्थि सक्थिनी

सक्थीनि ॥ २ ॥ सक्थ्ना सक्थिभ्यां सक्थिभिः । अक्ष्णा अक्षिभ्यां अक्षिभिः । इति पूर्ववत् प्रक्रिया ॥ १३ ॥

## नपुंसकस्य ह्रस्वः ॥ १४ ॥

नपुंसकस्य ह्रस्वो भवति । नपुंसकात् स्यमोर्लुक् ॥ ग्रामणि । नामिनः स्वरे । ईमौ । ग्रामणिनी ग्रामणीनि । नामिनः स्वरे। नोपधायाः इति दीर्घः ॥ १४ ॥

## टादावुक्तपुंस्कं पुंवद्वा ॥ १५ ॥

उक्तपुंस्कं नाम्यन्तं नपुंसकलिंगं टादौ स्वरे परे पुंवद्वा भवति । नामिनः स्वरे । ग्रामणिना ग्रामण्या ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने ग्रामणिभ्यां ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः ग्रामणिभ्यां ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्यां । नुमन्त-

स्यामि दीर्घो नामिनः स्वरे । ग्रामणीनां । आम् ङेः । ग्रामण्यां । ग्रामणीनि ग्रामण्योः ग्रामणिनोः ग्रामणिषु। हे ग्रामणि । हे ग्रामणिनी हे ग्रामणीनि । अतोम् । सोमपं सोमपे सोमपानि ॥ २॥ सोमपेन सोमपाभ्यां सोमपैः । सोमपाय सोमपा- सोमपेभ्यः । इति पूर्ववत् ।

उकारान्तो मधुशब्दः । नपुंसकात्स्यमोर्लुक् । मधु । नामिनः स्वरे इति नुमागमः मधुनी । जश्शसोः शिः । नोपधाया इति दीर्घः । मधूनि । पुनरपि । मधु मधुनी मधूनि । नामिनः स्वरे । मधुना मधुभ्यां मधुभिः । ऋकारान्तः कर्तृशब्दः । नपुंसकात् स्यमोर्लुक् । कर्तृ । नामिनः स्वरे । षुर्नोणोऽनन्ते । कर्तृणी कर्तृणि ॥ २ ॥ ऋरं । कर्त्रा कर्तृणा कर्तृभ्यां कर्तृभिः । कर्त्रे कर्तृणे कर्तृभ्यां कर्तृभ्यः । ऋतोङ उः । स च डित् । डिति टेः । कर्तुः कर्तृणः कर्तृभ्यां कर्तृभ्यः । कर्तुः

कर्तृणः कर्त्रोः कर्तृणोः कर्तृणां । कर्तरि कर्तृणि कर्त्रोः कर्तृणोः कर्तृषु । हे कर्तृ कर्तृणी हे कर्तृणि । ऐकारान्तः अतिरैशब्दः रायमतिक्रान्तमतिरि कुलं । नावमतिक्रान्तमतिनु जलं । उकारान्त उपगुशब्दः । उपगता गावो यस्येति तदुपगुः ॥ १५ ॥

॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

## ॥ अथ हसान्ताः पुँल्लिंगाः प्रदर्श्यन्ते ।

तत्र हकारान्तः पुँल्लिंगो अनडुहशब्दः । नामसंज्ञायां स्यादयः ।

पंचस्वनडुह आमागमो वक्तव्यः ॥ * ॥

### सावनडुहः ॥ १ ॥

अनडुहशब्दस्य सौ परे नुमागमो भवति ॥ १ ॥

---

१ " अनडुहश्च " इत्यतोनडुहइत्यनुकृष्य " पंचसु " इत्यतः पंचसु तथाचानडुहूशब्दस्य पंचसु वचनेषु परेषु आडागमः स्यादिति वक्तव्यार्थः

## संयोगान्तस्य लोपः ॥ २॥

संयोगान्तस्य लोपो भवति रसे पदान्ते च। रेफादुत्तरस्य सकारस्यैव लोपो नान्यस्य ॥ २ ॥

## हसेपःसेर्लोपः ॥ ३ ॥

हसान्तादीबंताच्च परस्य सेर्लोपो भवति। उवं इति वत्वं। लोप[१]विधिसामर्थ्यान्न दत्वम्। अनड्वान् अनड्वाहौ अनड्वाहः। अनड्वाहं अनड्वाहौ अनडुहः। अनडुहा अनडुद्भ्यां अनडुद्भिः ॥ ३ ॥

## वसां रसे ॥ ४ ॥

वसु स्रंसु ध्वंसु भ्रंसु अनडुह् इत्येतेषां रसे पदान्ते च दत्वं भवति। अनडुहे अनडुद्भ्यां अनडुद्भ्यः। अनडुहः अनडुद्भ्याम् अनडुद्भ्यः। अनडुहः अनडुहोः अनडुहां। अनडुहि अनडुहोः। खसे चपा झसानाम्। अनडुत्सु ॥ ४ ॥

---

१ सर्वविधिभ्यो लोपविधिर्बलवानितिन्यायस्य जागरूकत्वाद्दत्वाभाव इति राद्धान्तः

## धावम् ॥ ५ ॥

अनडुह्शब्दस्य धौ परे अमागमो भवति । सावनडुहः । उवं । स्वरहीनं परेण संयोज्यं । हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः । इत्यादि । गोदुह्शब्दस्य भेदः[1] ॥ ५ ॥

## दादेर्घः[2] ॥ ६ ॥

दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । गोदुघ् सि इति स्थिते ॥ ६ ॥

## आदिजबानां झसान्तस्य झभाः स्ध्वोः ॥ ७ ॥

धातोर्झसान्तस्यादौ वर्त्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥ ७ ॥

---

१ भेदःप्रक्रियाविशेषोवेद्यः २ द आदिर्यस्य स दादिः तस्य दादेः नाम्नश्चेतो नाम्नश्चेर्ति पदान्ते चेत्यतः पदान्ते इति उपादेयम् तथा तदर्थः कर्तव्यः

## वावसाने ॥ ८ ॥

अवसाने वर्त्तमानानां झसानां जबा भवन्ति चपा वा । गोधुक् गोधुग् गोदुहौ गोदुहः । गोदुहं गोदुहौ गोदुहः । गोदुहा । भकारादौ दादेर्घ इति घत्वे आदिजबस्य दकारस्य झभे धकारे च कृते झबे जबाः गोधुग्भ्यां गोधुग्भिः । खसे चपा झसानां । किलात् षः सः कृतस्येति षत्वं । कृषसंयोगे क्षः । गोधुक्षु । हे गोधुक् हे गोधुग् हे गोदुहौ हे गोदुहः ॥ ८ ॥

मधुलिह्शब्दस्य विशेषः ।

## हो ढः ॥ ९ ॥

धातोर्हकारस्य ढत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने । मधुलिट्[1] मधुलिड् मधुलिहौ मधुलिहः । हे मधुलिट् हे मधुलिड् हे म-

---

१ मधु लेढीति मधुलिट् भ्रमरः

ध्रुलिहौ हे मधुलिहः। मधुलिहं मधुलिहौ मधुलिहः। मधुलिहा मधुलिड्भ्यां मधुलिड्भिः ॥ ९ ॥

तुरासाह्शब्दस्य भेदः।

## सहेः षः साढि ॥ १० ॥

साढि रूपे सति सहेर्धातोस्सकारस्य[1] षकारादेशो भवति। तुराषाट्[2] तुराषाड् इत्यादि ॥ १० ॥

## द्रुहादीनां[3] घत्वढत्वे वा ॥ ११ ॥

द्रुहादीनां धातूनां घत्वढत्वे वा भवतः रसे पदान्ते च। मित्रध्रुक्[4] मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् मित्रद्रुहौ मित्रद्रुहः मित्रद्रुहं मित्रद्रुहौ मित्रद्रुहः। मित्र द्रुहा। झबे जबाः। मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां इत्यादि। एवं तत्त्वमुह्-स्नुह्शब्दौ ॥ ११ ॥

---

१ एतच्च छ ष स इति सूत्रादनुवर्तनीयम्. २ तुराषाण्मेघवाहनः इत्यमरः ३ "द्रुहादेर्वा" इति सूत्राल्लब्धमतोवार्तिकत्वमेतस्य अतएव व्यक्तवक्तव्यान्तोर्थः कार्य्यः. ४ मित्राद्द्रुह्यतीति मित्रध्रुक्.

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥

## चतुराम्[1] शौ च ॥ १२ ॥

चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः ॥ १२ ॥

## रः संख्यायाः ॥ १३ ॥

रेफान्तसंख्यायाः परस्यामो नुडागमौ भवति । णत्वं द्वित्वं । चतुर्णां चतुर्षु ॥ १३ ॥

नकारान्तोराजन्शब्दः।नोपधायाइति पंचसु दीर्घः

## नाम्नो नोलोपशधौ ॥ १४ ॥

नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ । राजा राजानौ राजानः । राजानं राजानौ । अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ । स्तो-श्चुभिः श्चुरिति चुत्वेन ञकारः ॥ १४ ॥

## जञोर्ज्ञः ॥ १५ ॥

१ चतुरिति लुप्तषष्ठीकं पदं अत्र इतोत्पंचसु इतोनुवर्तमानं पंचस्विति चकारेण समुच्चीयते इत्याह पंचस्वित्यादिना

जकारञकारयोर्योगे ज्ञो भवति । राज्ञः । राज्ञा । राज्ञे राजभ्यां राजभ्यः । वेङ्योः । राज्ञि राजनि राज्ञोः राजसु इत्यादि । एवं यज्वन् आत्मन् सुधर्मन् प्रभृतयः । अम्वयुक्तादिति[1] विशेषणादल्लोपो नास्ति । यज्वनः यज्वना इत्यादि । श्वन् युवन् मघवन् शब्दानां पंचसु राजन्शब्दवत् प्रक्रिया शसादौ तु विशेषः ॥ १५ ॥

## श्वादेर्व[2] उः ॥ १६ ॥

श्वादेर्वकारस्य उत्वं भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । शुनः । शुना श्वभ्यां श्वभिरित्यादि ॥ युवन्शब्दस्य वकारस्योत्वे कृते । सवर्णे दीर्घः सह । यूनः । यूना युवभ्यां युवभिरित्यादि । पथिन्शब्दस्य भेदः ॥ १६ ॥

---

१ मकारवकारसंयुक्ताक्षरं वर्ज्जयित्वेत्यर्थः

२ अत्रवसोर्वउमित्यतोवउम् अल्लोपः स्वरे इत्यतः शसादौ वादी पोरित्यतः ईकारः ईबपि इति मत्वाह वकारस्येति.

## इतोत्पंचसु ॥ १७॥

पथ्यादीनामिकारस्याकारादेशो भवति पञ्चसु परेषु ॥ १७ ॥

## थोनुट् ॥ १८॥

पथ्यादिनां थकारस्य नुडागमो भवति पञ्चसु स्यादिषु परेषु । पन्थन् सिं इति स्थिते ॥ १८ ॥

## आ सौ ॥ १९ ॥

पथ्यादीनां टेरात्वं भवति सौ परे । पन्थाः पन्थानौ पन्थानः। आत्वविधानान्न सेर्लोपः। हे पन्थाः। पन्थानं पन्थानौ ॥ १९ ॥

## पथां टेः ॥ २० ॥

पन्थादीनां टेर्लोपो भवति शसादौ स्वरे परे ।

---

१ पथिमाथिऋभुक्षामित्यर्थः २ आतोधातोर्लोप इत्यतो लोप इत्यनुवर्तते अन्यथानुपपत्या पथामिति बहुवचनेन जिघृक्षतावेतावुपात्तौ पाथिवन्स्यातामित्यर्थः

पथा पथिभ्यां पथिभिरित्यादि । एवं मथिन् ऋभुक्षिन्शब्दौ । दण्डिन्शब्दस्य भेदः ॥ २० ॥

## इनां शौ सौ ॥ २१ ॥

इन् हन् पूषन् अर्यमन् इत्येतेषां[1] शौ सौ चाधौ परे उपधाया दीर्घो भवति। दण्डी दण्डिनौ दण्डिनः। हे दण्डिन्। दंडिनं दंडिनौ दंडिनः । दंडिना दंडिभ्यां दंडिभिः। इत्यादि। ब्रह्महा ब्रह्महणौ ब्रह्महणः। हे ब्रह्महन् हे ब्रह्महणौ हे ब्रह्महणः। ब्रह्महणं ब्रह्महणौ। शसादौ अकारलोपः ॥ २१ ॥

## हनोघ्न ॥ २२ ॥

हन्तेर्धातोर्हकारस्य घकारो भवति नकारे ञ्णिति च परे। घसंयोगो णत्वनिषेधार्थः। ब्रह्मघ्नः ब्रह्मघ्ना

---

१ ननु सर्वे एते नान्ता अतोनोपधाया। इत्यनेनैव सिद्धो दीर्घः अतो नियमार्थं एतत्सूत्रारम्भः एतेषामत्रैव दीर्घो नान्यत्र तेन दण्डिनौ पूषणौ इत्यादौ न दीर्घः विभक्तिनिमित्तस्योपधालक्षणस्य च नियमेन व्यावर्त्यत्वात् पूषायत इति ये दीर्घोभवत्येव सिद्धेसत्यारम्भो नियमायेति अभियुक्तोक्तेर्जागरूकत्वात्.

ब्रह्महभ्यां ब्रह्महभिः इत्यादि। पूषा पूषणौ पूषणः। हे पूषन् हे पूषणौ हे पूषणः। पूषणं पूषणौ ॥२२॥

## षणोः ष्णः ॥ २३ ॥

षकारणकारसंयोगे ष्णो भवति शसादौ स्वरे परे। पूषन्शब्दस्य शसादौ स्वरे परे वा टेर्लोपः। पूष्णः। पूष्णा पूषभ्यां पूषभिः। पूष्णे। ङौ टिलोपो वेति केचित्। पूष्णि पूषणि पूषि पूष्णोः पूषसु। अर्य्यम्णः। अर्य्यम्णा अर्य्यमभ्यां इत्यादि। संख्[3]याशब्दाः पञ्चन्[3]प्रभृतयो बहुवचनान्ता[2]स्त्रि[4]षु सरू[5]पाः। पञ्चन् जस् इति स्थिते ॥ २३ ॥

## जश्शसोर्लुक् ॥ २४ ॥

षकारनकारान्तसंख्यायाः परयोर्जश्शसोर्लुक् भवति। प्रत्ययलोपे प्रत्ययलक्षणं। लुकि न तन्नि[1]मित्तं। पंच। पंच पञ्चभिः। पंचभ्यः ॥ २४॥

---

[1] लुकिसतितन्निमित्तकार्य्यं न भवति इति वक्तव्यार्थः

## ष्णः ॥ २५ ॥

षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति । नोपधाया इति दीर्घः । नाम्नोनो लोपश-धौ । पंचानां पंचसु । एवं सप्तन् नवन् दशन् प्रभृतयः ॥ २५ ॥

## अष्टनो डौ वा ॥ २६ ॥

अष्टन्शब्दात् परयोर्जश्शसोर्वा डौ भवति । डि-त्वाट्टिलोपः । अष्टौ अष्ट । अष्टौ अष्ट ॥ २६ ॥

## वासु ॥ २७ ॥

वाआ आसु अष्टन आसु परासु विभक्तिषु वा आत्वं भवति । अष्टाभिः अष्टभिः । अष्टभ्यः अष्टाभ्यः २ । अष्टानां । अष्टसु अष्टासु ॥ २७ ॥

## मकरान्त इदम्[1]शब्दः ।

---

[1] इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् इत्येतच्छब्दार्थबोधिका कारिकात्र नुसंधेया.

इदमोयं पुंसि ॥ २८ ॥

इदम्शब्दस्य पुंसि विषये अयमादेशो भवति सिसहितस्य। अयं द्विवचनादौ त्यदादेष्टेः स्यादावित्यकारः। इद औ इति स्थिते ॥ २८ ॥

दस्य मः ॥ २९ ॥

त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे। इमौ इमे। सर्वादित्वाज्जसी। त्यदादीनां घेरभावः। इमं इमौ इमान् ॥ २९ ॥

अन् टौसोः ॥ ३० ॥

इदमोऽनादेशो भवति टौसोः परयोः। अनेन॥३०॥

स्भ्यः ॥ ३१ ॥

इदमः सकारे भकारे च परे अकारो भवति। कृत्स्नस्य अङ्गीत्यात्वं। आभ्यां ॥ ३१ ॥

भिसूभिस् ॥ ३२ ॥

इदमदसोर्भिम् भिसेव[1] भवति। न भकारस्याकारः। एत्सिभ बहुत्वे। एभिः। अस्मै आभ्यां एभ्यः। अस्मात् आभ्यां एभ्यः। अस्य अनयोः एषां। अस्मिन् अनयोः एषु। किम्शब्दस्य त्यदादेष्टेः स्यादाविति सर्वत्राकारे कृते सर्वशब्दवद्रूपम्। कः कौ के। कं कौ कान्। इत्यादि। धकारान्तस्तत्वबुध् शब्दः। तस्य रसे पदान्ते चादिजबानामिति भकारः। वावसाने। तत्वभुत् तत्वभुद् तत्वबुधौ तत्वबुधः। हे तत्वभुत हे तत्वभुद्। तत्वबुधं तत्वबुधौ तत्वबुधः। तत्वबुधा तत्वभुद्भ्यां तत्वभुद्भिः। इत्यादि॥ ३२॥

जकारान्तः सम्राज् शब्दः

## छशाचराजादेः षः[2]॥ ३३॥

छकारान्तस्य शकारातस्य षकारान्तस्य च राज्

१ भिसोभिम्विधानं ब्भ्य इति बाधनार्थम्.

२ षकारान्तेषु पुनः षत्वविधानमाख्यातोच्चारिते "द्वेष्टि" इत्यादौ षत्वमेव यथास्यात् डत्वमाभूत् इत्येतदर्थम्.

यज् सृज् मृज् भ्राजादेश्च षकारो भवति । धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ ३३ ॥

षो डः ॥ ३४ ॥

षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने टकारः डकारश्च । सम्राट् सम्राड् सम्राजौ सम्राजः । सम्राजं सम्राजौ सम्राजः । सम्राजा सम्राड्भ्यां सम्राड्भिः इत्यादि । एवं विराजादयः । दकारान्तास्त्यद् तद् यद् एतद् शब्दास्तेषां त्यदादेष्टरः स्यादाविति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयं ॥ ३४ ॥

स्तः ॥ ३५ ॥

त्यदादेस्तकारस्य सौ परे सत्वं भवति । स्यः त्यौ त्ये । त्यं त्यौ त्यान् । सः तौ ते तं तौ तान् । यः यौ ये । यं यौ यान् । एषः एतौ एते । एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः ॥ * ॥

उक्तस्य पुनरुक्तमन्वादेशः । यथानेन बालेन व्याकरणमधीतं एनं छन्दोध्यापय । एतं एनं एतौ एनौ एतान् एनान् । एतेन एनेन एताभ्यां एतैः । एतयोः एनयोः एतेषां । एतस्मिन् एतयोः एनयोः एतेषु । छकारान्तस्तत्त्वप्राछ्शब्दः । तत्त्वप्राट् तत्त्वप्राड् तत्त्वप्राछौ तत्त्वप्राछः । इत्यादि ॥ ३५ ॥

## नोलोपः ॥ ३६ ॥

धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपो भवति । अञ्चेः पञ्चसु नुम् वक्तव्यः ॥ * ॥
प्रत्यन् च् इति स्थिते । स्तोः श्चुभिः श्चुरिति चुत्वेनात्र ञकारः । संयोगान्तस्य लोपः ॥ ३६ ॥

## चोः कुः ॥ ३७ ॥

चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च

---

१ तत्वं पृच्छति इति प्राट् क्विबपि तस्य सर्वापहारिलोपः

२ त्रितोनुम् इत्यतः परं अचेश्चेति सूत्रमस्ति तस्यायमर्थः अंचे पंचसु नुमागमो भवति एतदाचार्य्यैर्लाघवार्थं इत्थं व्याख्यातम्.

रसे पदान्ते । यथासंख्येन । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ ॥ ३७ ॥

## अंचेर्दीर्घश्च[1] ॥ ३८ ॥

अञ्चेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे तद्धिते ईपीकारे च । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचः । प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः । प्रत्यक्षु । एवं तिर्य्यच्प्रभृतयः । तिर्य्यङ् तिर्य्यञ्चौ तिर्य्यञ्चः । तिर्य्यञ्चं तिर्य्यञ्चौ ॥३८॥

## तिरश्चादयः ॥ ३९ ॥

तिरश्चादयो निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्चः । तिरश्चा तिर्य्यग्भ्यां तिर्य्यग्भिः । तिर्य्यक्षु । उदच् शब्दस्य उदीच इति

---

१ अत्र अचेरिति लुप्तनकाराञ्चातिनिर्देशः यत्रास्य नलोपः तत्रैव यथा स्यादिति ज्ञापनार्थः.

निपात्यते शसादौ स्वरे परे। उदीचः । उदीचा इत्यादि । एवमग्निचित् ॥ ३९ ॥

तकारान्त उकारानुबन्धो महच्छब्दः ।

## ऋितो नुम् ॥ ४० ॥

उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु ॥ ४० ॥

## न्संमहतोऽधौ दीर्घः शौच ॥ ४१ ॥

न्सन्तस्याप्शब्दस्य महच्छब्दस्य च उपधाया दीर्घो भवति पञ्चसु धिवर्जितेषु शौ च परे। महान् महान्तौ महान्तः । महान्तं महान्तौ महतः । महता महद्भ्यां । महद्भिः । हे महन् इत्यादि ॥ ४१ ॥

उकारानुबन्धो भवत्शब्दः ।

## अत्वसोः सौ ॥ ४२ ॥

---

१ उश्च आ च ऋौ तावितौ यस्येति द्वंद्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमभिसंबध्यते इत्यत आह उकारानुब न्धस्येति. २ महत्सीत्यत्रउदित्वान्नुमि दीर्घे हसेपँ इति सिलोपे संयोगान्तत्वा त्तलोपेच एवंस्यात्

पुंस्शब्दस्य पञ्चसु परेषु असुङादेशो भवति ङ-
कारोऽन्त्यादेशार्थः ॥ ४५ ॥

स्वरे मं[1]ः ॥ ४६ ॥

अनुस्वारस्य मकारो भवति । पुम् अस् इति स्थिते ।
वृतोनुम् । न्संमहतोऽधौ दीर्घः शौ च । संयोगान्त-
स्य लोपः । पुमान् पुमांसौ पुमांसः । पुमांसं पुमां-
सौ पुंसः । पुंसा पुंभ्यां पुंभिः । हे पुमन् ॥ ४६ ॥

असंभं[2]वे पुंसः कक् सौ ॥ ४७ ॥

वेदान्तैकवेद्यस्यात्मनो बहुत्वासम्भवेऽर्थे वाच्ये सति
पुंस्शब्दस्य सुपि परे कगागमो भवति ॥ ४७ ॥

---

१ एतत्सूत्रं माधवप्रभृतीनामसंमतत्वात् उपेक्ष्यम्. २ एकदानुभू-
तिस्वरूपाचार्यः स्वमुखासंस्कृतपदानिर्गलितत्वेन पंडितैर्धिक्कृतः. तदा
वाग्देवतामहदुपासनया सप्तशतसूत्रविलक्षणं सूत्रमचीकरत् तेन च
पुंक्ष्विति सिद्धिः नान्यथा इति भावः.

## स्कोराद्योश्च ॥ ४८ ॥

संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च। पुंक्षु। एवं विद्वस्शब्दः। विद्वान् विद्वांसौ विद्वांसः। विद्वांसं विद्वांसौ ॥ ४८ ॥

## वसोर्वउः ॥ ४९ ॥

वसोः सम्बन्धिनो वकारस्य उत्वं प्राप्नोति शसादौ स्वरे परे ताद्धिते ईपि ईकारे च। विदुषः। विदुषा। वसांरसे। विद्वद्भ्यां विद्वद्भिः। विद्वत्सु इत्यादि। सुवचस् शब्दस्य अत्वसोः सौ इति दीर्घः। सुवचाः सुवचसौ सुवचसः। हे सुवचः। सुवचसं सुवचसौ सुवचसः। सुवचसा सुवचोभ्यां सुवचोभिः। उशनस् शब्दस्य भेदः ॥ ४९ ॥

## उशनसां ॥ ५० ॥

उशनस् पुरुदंसस् अनेहस् इत्येतेषां सेरधेर्डा भवति। डकाराष्टिलोपार्थः। उशना[1]। उशनसौ। धौ सान्तता नान्तता अदन्तता वा वक्तव्या ॥ ❋ ॥ हे उशनः हे उशनन् हे उशन।

अदस्शब्दस्य विशेषः त्यदादेष्टेरिति सर्वत्राकारः, अद सि इति स्थिते ॥ ५० ॥

## सौ सः ॥ ५१ ॥

अदसो दकारस्यसौ परे सत्वं भवति ॥ ५१ ॥

## सेरौ ॥ ५२ ॥

अदसः सेरौ भवति। असौ। द्विवचने अदस् औ इति स्थिते। दस्य मः ॥ ५२ ॥

## मादू ॥ ५३ ॥

उश्च ऊश्च ऊ। अदसो मकारात्परस्य ह्रस्वस्य

---

1 उशनाभार्गवः कविः इत्यमरः

ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति । अमू । बहुवचने सर्वादित्वाज्जसी अद इ । अमे इति स्थिते ॥ ५३ ॥

## एरी बहुत्वे ॥ ५४ ॥

बहुत्वे सत्यदस एकारस्य ईकारो भवति । अमी । अमुं अमू अमून् । मत्वे उत्वे च कृते टानाखि-यां । अमुना । द्विवचने अश्चीत्यात्वं पश्चादुकारः । अमूभ्यां ॥ ५४ ॥

## भिसभिस ॥ ५५ ॥

इदमदसोर्भिस् भिसेव भवति न भकारस्याकारः । अमीभिः । अमुष्मै अमूभ्यां अमीभ्यः । अमु-ष्मात् अमूभ्यां अमीभ्यः । अमुष्य । ओसि एत्वे अयादेशे च कृते पश्चादुकारः । अमुयोः अमीषां । अमुष्मिन् अमुयोः अमीषु ॥ ५५ ॥

## सामान्ये अदसः[1] कः स्यादिवच्च ॥५६॥

अमुकः अमुकौ[2] अमुके ॥ ५६ ॥

इति हसान्ताः पुँल्लिङ्गाः ॥

## ॥ अथ हसान्ताः स्त्रीलिंगाः ॥

तत्र हकारान्त उपानह् शब्दः ।

## नहो धः ॥ १ ॥

नहो हकारस्य धकारादेशो भवति रसे पदान्ते च । वावसाने धस्य दत्वं तत्वं । उपानत् उपानद् उपानहौ उपानहः । हे उपानत् । उपानहं उपानहौ उपानहः । उपानहा उपानद्भ्यां उपानद्भिः इत्यादि ॥ १ ॥

वकारान्तो दिव् शब्दः ।

---

१ अवयवावयविसम्बंधे षष्ठी तेन अदसोवयवः कः प्रत्ययो भवति इत्यर्थः अत्र अदस इत्युपलक्षणं सर्वादीनां तेन यकः सकः एषक इत्यादि सिद्ध्यति २ इदं चेदानींतनैः पण्डितंमन्यैः सामान्ये अदस इत्यन्यथाकृत्वा प्रयुक्तम् युक्तंचैतत् असकाविति.

## दिव औ ॥ २ ॥

दिवो वकारस्य औकारादेशो भवति सौ परे । द्यौः दिवौ दिवः । हे द्यौः ॥ २ ॥

## वामि[1] ॥ ३ ॥

दिवो वकारस्य आमि परे वा आत्वं भवति । द्यां दिवं दिवौ दिवः । दिवा ॥ ३ ॥

## ऊरसे ॥ ४ ॥

दिवो वकारस्य रसे परे उकारो भवति । द्युभ्यां द्युभिः द्युषु । इत्यादि ॥ ४ ॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ।

## त्रिचतुरोःस्त्रियां तिसृचतसृवत् ॥५॥

स्त्रियां वर्तमानयोः त्रिचतुर्शब्दयोः तिसृचतसृ इत्येतावादेशौ भवतः विभक्तौ परतः ।

---

1 एतच्च वार्तिकं अतएव अमि दिवो वा आकारादेशो वक्तव्यः इत्यर्थमकरोन्माधवः

ऋकारश्च ऋकारवत्। ततस्तुरार् इत्यार् न भवति। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः॥ ५॥

## न तिसृ चतसृ छन्दसि वा॥ ६॥

इत्येतयोर्दीर्घो न भवति नामि परे। तिसृणां। छन्दसि तु भवति। तिसॄणां। तिसृषु। एवं चतसृ॥

### गिर् शब्दस्य भेदः॥

## य्वोर्विहसे॥ ७॥

धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हस-परयोः पदान्ते च। गीः गिरौ गिरः। हे गीः। गिरं गिरौ गिरः। गिरा गीर्भ्यां गीर्भिः। गीर्षु। एवं धूः धुरौ धुरः। हे धूः। पूः पुरौ पुरः। हे पूः। पुरा पूर्भ्यां पूर्भिः। पूर्षु।

### धकारान्तः समिध्शब्दः।

---

अत्र धातोः प्रेरणे इत्यतो धातोरित्यनुवर्तते. २ हसः परो याभ्यां तौ हसपरौ तयोर्हसपरयोः. ३ विसर्गनुमस्थानिकानुस्वारव्यवधानेपि कि-सस्य षः

समित्[1] समिद् समिधौ । हे समिद् हे समित् । समिद्भ्यां समिद्भिः । समित्सु ।

भकारान्तः ककुभ्शब्दः ।

ककुप् ककुब् ककुभौ ककुभः । हे ककुप् हे ककुब् इत्यादि । दकारान्तास्त्यदादयस्तेषां त्यदादेष्टेरिति सर्व्वत्राकारः । आबतः स्त्रियामित्याप् । स्या त्ये त्याः । सा ते ताः । या ये याः । एषा एते एताः । अन्वादेशे । एतां एनां एते एने एताः एनाः । एवं किम् । का के काः ॥ ७ ॥

## इयं स्त्रियां ॥ ८ ॥

इदम्शब्दस्य स्त्रियामियं भवति सौ परे । इयं इमे इमाः । इमां इमे इमाः । अनया आभ्यां आभिः । अस्यै आभ्यां आभ्यः इत्यादि ।

चकारान्तस्त्वच्शब्दः ।

---

१ इध्ममेधः समित्स्त्रियाम् इत्यमरः

चोः कुरिति कुत्वं । त्वक् त्वग् त्वचौ त्वचः । त्व-

षड्लिंगाः ।

ग्भ्यां । त्वक्षु । हे त्वक् । एवं ऋच् वाच् प्रभृतयः ।

अप्शब्दो नित्यं बहुवचनान्तः ।

अप् जस् इति स्थिते । न्सम्महत इति दीर्घः । आपः । द्वितीयाबहुवचने पञ्चसु इति विशेषणात् न दीर्घः । अपः ॥ ८ ॥

## भिद्पां[1] ॥ ९ ॥

अबादीनां भकारे परे दत्वं भवति । अद्भिः । अ-द्भ्यः । अपां । अप्सु ॥ ९ ॥

शकारान्तो दिश् शब्दः ॥

## दिशां कः ॥ १० ॥

दिश् दृश् स्पृश् इत्यादिनां रसे पदान्ते च कत्वं भवति । दिक् दिग् दिशौ दिशः । हे दिक् हे दिग् । दिशं दिशौ दिशः । दिशा दिग्भ्यां दि-ग्भिरित्यादि ।

---

१ अपामिति बहुवचनं चिन्त्यं.

## षकारान्तस्त्विष्शब्दः ।

षोड इति डत्वं वावसाने टकारः । त्विट् त्विड् त्विषौ त्विषः । त्विषा त्विड्भ्यां त्विड्भिः । इत्यादि । आशिष्शब्दस्य सजुष्शब्दवद्रूपं ज्ञेयं । आशीः आशिषौ आशिषः । आशीर्भ्यां । आशीःषु । हे आशीः । स्त्रीलिंगस्यादस्शब्दस्य सौ न विशेषः । द्विवचनादौ टेरत्वे मत्वे च कृते अनन्तरमाबतः स्त्रियामित्याप् दीर्घत्वं विभक्तिकार्यं पश्चान्मादू इति ह्रस्वस्य दीर्घस्य उकार ऊकारश्च । असौ अमू अमूः । अमुं अमू अमूः । अमुया अमुभ्यां अमूभिः अमुष्यै अमूभ्यां अमूभ्यः अमुष्याः अमूभ्यां अमूभ्यः । अमुष्याः अमुयोः अमूषां अमुष्यां अमुयोः अमूषु ॥ १० ॥

इति हसान्ताः स्त्रीलिंगाः ।

# अथ हसान्ता नपुंसकलिंगाः प्रदर्श्यन्ते ॥

रेफान्तो वार्शब्दः ।

## नपुंसकात्स्यमोर्लुक् ॥१॥

वाः वारी वारि २ । अयम इति विशेषणात् नुम् न भवति । वारा वार्भ्यां वार्भिः । वारे इत्यादि । चतुर्शब्दे चतुराम्शौचेत्याम् । चत्वारि । चत्वारि । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । चतुर्णां । चतुर्षु ॥१॥

नकारान्तोऽहन् शब्दः ।

## अह्नः सः ॥ २ ॥

अहन् शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च । सोर्विसर्गः । अहः । इमौ वेङ्यो: । अह्नी अहनी अहानि । अह्ना अहोभ्यां अहोभिः । अह्ने अहोभ्यां अहोभ्यः । अह्नः अह्नोः अह्नां । अह्नि अहनि अह्नोः अहस्सु ।

ब्रह्मन्शब्दस्य रसे पदान्ते च नस्य लोपो वक्तव्यः ।
ब्रह्म ब्रह्मणी ब्रह्माणि । पुनः । ब्रह्म ब्रह्मणी ब्रह्माणि ।
ब्रह्मणा ब्रह्मभ्यां ब्रह्मभिः इत्यादि । सम्बोधने[1] धौ
नपुंसके नलोपो वा वक्तव्यः ॥ हे ब्रह्म हे ब्रह्मन् ।
एवं चर्मन् वर्मन् शर्मन् कर्मन् व्योमन् दामन्
नामन् प्रभृतयः ।

नान्तादन्ताच्छन्दसि ङिश्योर्लोपो वक्तव्यः॥ ❋॥
छन्दस्यागमजानागमजयोर्लोपालोपौ च
वक्तव्यौ ॥ ❋ ॥

परमे व्योमन्[2], सर्व्वाभूतानि । त्यदादीनां स्यमो-
र्लुकि कृते टेरत्वं न भवति । स्यादाविति विशेष-
णात् । द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं ज्ञेयं ।
त्यत् त्ये त्यानि । पुनः । त्यत् त्ये त्यानि । त्येन

१ संबोधनार्थके धौ क्लीबविशिष्टे च नकारस्य लोपो वा स्यादित्यर्थः
२ यथापरमेव्योमानि यथाच सर्वाणिभूतानि इत्यादौ आगमजस्यङेः
शेर्लोपस्ततएवतद्रूपसिद्धेः

त्याभ्यां त्यैरित्यादि । एवं तत् ते तानि २। यत् ये यानि २। एतत् एते एतानि २। किं के कानि २। इदम् इमे इमानि २। तृतीयादौ सर्वत्र पुंवत्।



चकारान्तः प्रत्यच् शब्दः ।

प्रत्यक् प्रत्यग्। दीर्घश्च । प्रतीची । नुमयमः। प्रत्यञ्चि ।

तकारान्तो जगत्शब्दः ।

जगत् जगती जगन्ति। जगद्भ्यां जगद्भिरित्यादि। महच्छब्दे तु न्संमहत इति सिविषये दीर्घो न । महत् महती महान्ति २। इत्यादि। षकारान्तो हविष्शब्दः। सुजुष् च। हविः हविषी हवींषि २। इत्यादि। सजूः सजुषी सजूंषि २। एवं सकारान्ताः पयस्तेजस्वर्चस्प्रभृतयः।

पयः पयसी पयांसि २। पयसा पयोभ्यामित्यादि। अदस्शब्दस्य स्यमोर्लुकि कृते स्रोर्विसर्गः। द्विवचनादौ टेरत्वे कृते मत्वोत्वे। अदः अमू अमूनि। पुनः २। अमुना अमूभ्यां अमीभिः। अमुष्मै अमूभ्यां अमीभ्यः। अमुष्मात्। अमुष्य अमुयोः अमीषां। अमुष्मिन्। अमुयोः अमीषु शेषं पुँल्लिंगवत्॥ २॥

इति हसान्ता नपुंसकलिंगाः॥

अथ युष्मदस्मदोः स्वरूपं निरूप्यते

तयोश्च वाच्यलिङ्गत्वात् त्रिष्वपि लिङ्गेषु समानं रूपम्।

## त्वमहं[1]सिना॥ १॥

---

१ सिनेतिसहादियोगे तृतीया तेन सिप्रत्ययेन सहितयोरित्यर्थः ननु त्वमहमोर्हसान्तत्वात् सिलोपः सिद्धः पुनः किमर्थो व्यर्थः परिश्रमः सिनेतिमान्तत्वस्य तथा तकारोच्चारणस्य गौणे अतित्वमित्यादौ चरितार्थत्वात्

युष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौ भवतः यथासंख्येन । त्वं अहं ॥ १ ॥

युवावौ द्विवचने ॥ २ ॥

युष्मदस्मदोर्द्विवचने परे युवाव इत्येतावादेशौ भवतः ।

आमौ ॥

युष्मदस्मदोः पर औ आम् भवति । युवां आवां ॥ २ ॥

यूयं वयं जसा ॥ ३ ॥

जसा सहितयोर्युष्मदस्मदोर्यूयं वयं इत्येतावादेशौ भवतः । यूयं वयं ॥ ३ ॥

त्वन्मदेकत्वे ॥ ४ ॥

युष्मदस्मदोः त्वत् मत् इत्येतावादेशौ भवतः एकत्वे गम्यमाने । एकत्वं नाम एकार्थवाचित्वं नत्वेकवचनं तेन त्वत्पुत्रो मत्पुत्र इत्यादौ त्वन्मदादेशौ भवत एव ॥ ४ ॥

## आमूस्भौ ॥ ५ ॥

युष्मदस्मदोष्टेरत्वं भवति अमि सकारे भिसि च परे। त्वां मां । युवां आवां । त्यदादेष्टेरत्वे कृते शसीति दीर्घत्वं ।

शसो नो वक्तव्यः ॥ * ॥

युष्मान् अस्मान् । त्वन्मदादेशे कृते ॥ ५ ॥

## एटाङ्योः ॥ ६ ॥

युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः । अयादेशः । त्वया मया । युवाभ्यां आवाभ्यां । युष्माभिः अस्माभिः ॥ ६ ॥

## तुभ्यं मह्यं[1] ङ्या ॥ ७ ॥

ङेसहितयोर्युष्मदस्मदोस्तुभ्यंमह्यमित्येतावादेशौ भवतः । तुभ्यं मह्यं । युवाभ्यां आवाभ्यां ॥ ७ ॥

---

१ अन्यथा त्यदादेष्टेरः स्यादाविति अत्वेङे आगिति स्यात्.

## भ्यसूशूभ्यमू ॥ ८ ॥

युष्मदस्मद्भ्यां परो भ्यस् शभ्यं भवति । शकारो भकारादित्वव्यावृत्त्यर्थः तेनात्वैत्वे न भवतः । युष्मभ्यं अस्मभ्यं ॥ ८ ॥

## ङसिभ्यसोःश्तुः ॥ ९ ॥

पञ्चम्या ङसिभ्यसोः श्तुर्भवति । शकारः सर्वादेशार्थः । त्वत् मत् । युवाभ्यां आवाभ्यां । युष्मत् अस्मत ॥ ९ ॥

## तव मम ङसा ॥ १० ॥

ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः । तव मम । युवयोः आवयोः । सर्व्वादित्वात्सुट् ॥ १० ॥

## सामाकं ॥ ११ ॥

युष्मदस्मद्भ्यां परः साम् आकम् भवति । युष्मा-

कम् अस्माकम् । त्वयि मयि । युवयोः आवयोः । युष्मासु अस्मासु ।

अथाऽनयोरादेशाविशेषा[1]विधिः प्रदर्श्यते ॥ ११ ॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवान्नौवस्नसौ ॥१२॥

तत्रैकवचनेन सह ते मे भवतः । द्विवचनेन सह वां नौ । बहुवचनेन सह वस्नसौ ।

स्वामी[3] ते[1] स[2] समायातः[4] स्वामी[6] मे[5] सांप्रतं[7] गतः[8] । न
मस्ते[12][10] भगवन्[9] भूयो[11] दे[16] हि मे[13] मोक्ष[15]मक्षयं[14] ॥ १ ॥
स्वामी[3] वां[2] स[1] जहासो[5]च्चै[4] दृष्ट्वा[8] नौ दानयाचनां[7] । रा-
जा[10] वां[9] दास्यते[12] दानं[11] ज्ञानं[15] नौ[14] मधुसूदनः[13] ॥ २ ॥
देवो[1] वा[3]मवता[7]द्विष्णु[2][9][4]र्नरकान्नौ[6] जनार्दनः[5][8] । स्वामी[1]
वो[8] बलवान्[11] राजा[10] स्वामी[15] नो[12] ऽसौ[13] जनार्दन[14] ३

1 विशेषेण विधीयते यस्यांसा विशेषविधिः आदेशस्य विशेषविधिरिति तथा.

नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम्।
सावन्दान्वः प्रपश्यामः पश्यामो नः सुदुःखिनः ४

## त्वामामा ॥ १३ ॥

अमासहितयोर्युष्मदस्मदोस्त्वामादेशौ भवतः । पश्यामि त्वां मदालीढं पश्य मां मदमेदकं । पश्यामि त्वां जगत्पूज्यं पश्य मां जगतांपते ॥१३॥

## नादौ ॥ १४ ॥

पादादौवर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति। रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता। स एव नाथो भगवानस्माकं पापनाशनः ॥ पादादाविति किं। पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः। हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः ॥ १४ ॥

## चादिभिश्च ॥ १५ ॥

चादिभिरपि योगे नैते आदेशा भवन्ति। तव चा-

यं प्रभुर्विष्णुर्मम चायं तथैव च । तव ये शत्रवो राजन् मम तेप्यतिशत्रवः ॥ १५ ॥

## चादिर्निपातः ॥ १६ ॥

चादिर्गणो निपातसंज्ञको भवति ।

च वा ह अह एव एवं नूनं पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् शनैस् स्वर् अन्तर् प्रातर् पुनर् भूयस् आहो स्वित् उत सह ऋते अन्तरेण अन्तरा नमस् अलम् कृतं । अमानोनाप्रतिषेधे । ईषत् किल खलु वै आरात् भृशं यत् तत् स्वराश्च इत्येवं चादिर्गणो निपातसंज्ञो भवति ॥ तत्रादिर्गणो विभक्त्यर्थे निपात्यते । तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र । क्व कुह । अस्मिन्निति अत्र । कस्मिन् काले कदा । तस्मिन् काले तदा । यस्मिन् काले यदा । सर्वस्मि-

न्काले सर्वदा । एकदा । तेन प्रकारेण तथा । एवं यथा कथं । अनेन प्रकारेण इत्थं । तस्मादिति ततः । एवं कुतः अतः इतः । सार्वविभक्तिकस्तसिरित्येके । पूर्वस्मिन्निति पुरस्तात् । परस्मिन्निति परेण । आहि[1] च दूरे । दक्षिणाहि[2] वसन्ति चाण्डालाः । किमः सामान्ये[3] चिदादिः । कश्चित् कश्चन क्वचन । तदधीनकार्त्स्न्ययोर्वासात् । राजाधीनं राजसात् । सर्वं भस्म करोति इति भस्मसात् । ऊर्यररयंगीकरणे । उरीकृत्य उररीकृत्य । सद्यआदिः काले निपात्यते । सद्यः अद्य सपदि अधुना सांप्रतं । शीघ्रं झटिति पूर्वेद्युः अन्येद्युः परेद्युः उभयेद्युः । यर्हि तर्हि काले ॥ १६ ॥

## प्रादिरुपसर्गः ॥ १७ ॥

प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि

---

१ दूरेऽर्थेवाच्येसति आहिप्रत्ययोभवति. २ दक्षिणस्यांदिशि दूरे चांडालाश्चान्त्यजा निवसन्ति ३ प्रकृत्या अविशेषेऽर्थे.

आङ् नि अधि अपि अति सु उद् अभि प्रति परि
उप अन्तर् आविर् अयं गण उपसर्गसंज्ञकः॥१७॥

## प्राग्धातोः ॥ १८ ॥

उपसर्गा धातोः प्राक् प्रयोक्तव्याः ॥ १८ ॥

## तदव्ययं ॥ १९ ॥

तदिदं चादिरूपमव्ययसंज्ञं भवति ॥ १९ ॥

## क्त्वाद्यन्तंच ॥ २० ॥

क्त्वा क्यप् तुम् नम् च्वि डा धा वतु आम् कृत्वस् शस् इत्याद्यन्तमव्ययसंज्ञंभवति ॥ २० ॥

## अव्ययाद्विभक्तेर्लुक् ॥ २१ ॥

अव्ययात्परस्य विभक्तेर्लुग् भवति न तु शब्दनिर्देशे। अव्ययानां न च लिङ्गादिनियमः। उक्तं हि। सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययं॥ उक्तान्यव्ययान्यलिङ्गानि ॥ २१ ॥ इत्यव्ययानि ॥

## ॥ अथ स्त्रीप्रत्ययाः ॥

अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ।

### आबतः स्त्रियां ॥ १ ॥

अकारान्तान्नाम्नः[1] स्त्रियां वर्त्तमानादाप्प्रत्ययो भवति । जाया माया मेधा श्रद्धा धारा इत्यादि ॥

अजादेश्चाप्[2] वक्तव्यः ॥ * ॥

अजा एडका कोकिला बाला वत्सा शूद्रा गणिका ॥ १ ॥

### काप्यतः ॥ २ ॥

कापि परे पूर्वस्याकारस्य इकारो भवति । कारिका पाठिका कालिका तालिका ।

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपञ्चैव

---

१ तस्मादित्यतो नाम्न इत्यनुवर्तनीयम्. २ अविहितलक्षण आप् अजादौ ज्ञेयः.

हसान्तानां[7] यथा[9] वाचा[10] निशा[11] दिशा[12] ॥ अवगाहः वगाहः अपिधानं पिधानं ॥ २ ॥

## ह्रस्वो वा ॥ ३ ॥

स्त्रियां कापि[1] परे तरादौ च पूर्वस्य ह्रस्वो वा भवति । वेणिका वेणीका नदिका नदीका श्रेयसितरा श्रेयसीतरा श्रेयसितमा श्रेयसीतमा । नौकादौ न भवति वाग्रहणादियं विवक्षा । निश्चयेन पतन्त्यनेकेष्वर्थेष्विति निपातानामनेकार्थत्वात् ॥ ३ ॥

## न्नण ईप् ॥ ४ ॥

नकारान्तादृकारान्तादणंताच्च स्त्रियामीप्प्रत्ययो भवति । दण्डिनी दन्तिनी करिणी मालिनी ।

ईपि राज्ञो[2] ऽलोपो वक्तव्यः ॥ * ॥

राज्ञी । शुनी कर्त्री हर्त्री औपगवी ॥ ४ ॥

---

१ काप्यत इत्यस्मात् कापिपरे इत्यनुवर्तनीयम्. २ ईपिसातिराज्ञइत्येतत्संयुक्ताक्षरस्य योह्यकारस्तस्यलोपः स्यादिति वक्तव्यार्थः.

## यस्य लोपः ॥ ५ ॥

इश्चअश्चयस्तस्य लोपो भवति स्वरे यकारे च परे ॥

## षृविृतः ॥ ६ ॥

षकार टकार उकार ऋकारानुबन्धात् स्त्रिया-
मीप्प्रत्ययो भवति । ष, वराकी । ट, कुरुचरी । उ, गो-
मती ॥ ६ ॥

## अप्प्ययोरान्नित्यम् ॥ ७ ॥

अप्प्रत्ययप्रत्ययसम्बन्धिनोऽवर्णात् परस्य श-
तुर्नित्यं नुमीकारे ईपि च परे । ऋ, पचन्ती पठन्ती
इत्यादि ॥ ७ ॥

## नदादेः ॥ ८ ॥

नदादेर्गणात् स्त्रियामीप् प्रत्ययो भवति । नदी
गौरी गौतमी ॥ ८ ॥

## इन्द्रादेरानीप्[1] ॥ ९ ॥

इन्द्रादेर्गणादानीप् प्रत्ययो भवति। इन्द्राणी भवानी शर्वाणी ॥ ९ ॥

## ईप् समाहारे गुणश्च ॥ १० ॥

समाहारार्थे ईप् प्रत्ययो भवति गुणश्च। त्रयी पञ्चकुली ॥ १० ॥

## पुंयोगेच ॥ ११ ॥

अकारात् पुंयोगे ईप्प्रत्ययो भवति। शूद्रस्य स्त्री शूद्री गणकी ॥ ११ ॥

## जातेरयोपधात् ॥ १२ ॥

जातिवाचिनोऽयकारोपधादकारान्तात् स्त्रियामीप्प्रत्ययो भवति। मेषी सूकरी हंसी कुक्कुटी

---

१ ननुच इन्द्रादिभ्योदन्तेभ्योनीप्यपि सवर्णदीर्घे कृते सेत्स्यत्येवेन्द्राणीत्याद्यपि किमाकारेण नचवाच्यं अलोपः स्यादिति अनीपोऽश्रुदुपदेशसामर्थ्यात् एवंतर्हि इन्द्रयति तत्स्त्रीइन्द्राणी इत्यादि हसान्ताच्छ्रवणार्थमाकारोपदेशः,

ब्राह्मणी। अयकारोपधादितिकिम्। क्षत्रिया वैश्या॥
प्रथमवयोवाचिनोऽत ईप् वक्तव्यः॥ ❋ ॥
कुमारी किशोरी कलभी। प्रथमग्रहणात् किं वृद्धा स्थविरा। अद्ग्रहणादिति किम्। शिशुः॥ १२॥

## स्वाङ्गाद्वा॥ १३॥

स्वाङ्गवाचिनो वा स्त्रियामीप् प्रत्ययो भवति। सुमुखी मृगाक्षी तन्वङ्गी। वाग्रहणात् पद्मवदना कमलवदना इत्यादौ न भवति।

क्तिदिकारादक्तेरीब् वा वक्तव्यः॥ ❋ ॥
अंगुलिः अङ्गुली धूलिः धूली आजिः आजी। अक्तेरिति विशेषणात् क्तिः भूतिः॥ १३॥

## ऐच मन्वादेः॥ १४॥

मन्वादेर्गणात् स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च। मनायी। चकारान्मनोरौ वा। मनावी। वृषाकपायी॥ १४॥

## पत्न्यादयः ॥ १५ ॥

पत्न्यादयो निपात्यन्ते । पत्नी अंतर्वत्नी सखी अशिश्वी अर्द्धजरती युवती । प्राची प्रतीची उदीची समीची । दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गः । दाराः दारान् दारैः दारेभ्यः २ दाराणां दारेषु हे दाराः ॥ १५ ॥

## वौर्गुणात्[1] ॥ १६ ॥

उकारान्ताद् गुणवाचिनो वा स्त्रियामीप् प्रत्ययो भवति । पट्वी पटुः मृद्वी मृदुः तन्वी तनुः ऋज्वी ऋजुः ॥ १६ ॥

## उत ऊः ॥ १७ ॥

उकारान्तान्मनुष्यजातेः स्त्रियामूप्प्रत्ययो वा भवति । पंगूः पंगुः वामोरूः वामोरुः ॥ १७ ॥

---

गुणलक्षणंतु महाभाष्ये द्रष्टव्यम् ॥ सत्वे निविशतेपैति पृथग् जातिषु दृश्यते ॥ आधेयश्च क्रियाजश्च सोऽसत्वप्रकृतेर्गुणः ॥ १ ॥

## यूनस्ति ॥ १८ ॥

युवन्शब्दात् स्त्रियां तिप्रत्ययो भवति । युवतिः । एभ्यो नामत्वात् स्यादयः आबन्तादाप् । आप इति सिलोपः ईबन्ताद्धसेपः सेर्लोपः पूर्ववत् प्रक्रिया ॥ १८ ॥

॥ इति स्त्रीप्रत्ययाः ॥

## ॥ अथ कारकाणि ॥

अथ विभक्त्यर्थो निरूप्यते ।

## लिंगार्थे प्रथमा ॥ १ ॥

धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिङ्गं तस्यै-वार्थे सन्मात्रे प्रथमाविभक्तिर्भवति । लिङ्गादयो-ऽपि प्रथमार्था इति केचित् । तत्सद्ब्रह्म ॥ १ ॥

---

१ यद्यत्रलिंगशब्दात्स्त्रीपुंनपुंसकानां ग्रहणं तदा स्त्रियां विशिष्टत्वात् परत्वाच्चावादयः स्यः प्रथमाबाधकाः अतः पूर्वाचार्य्यसंज्ञा इत्येवाश्रयो वरीयान्.

## अन्योक्ते प्रथमा ॥ २ ॥

रविरिव राजते राजा । रोषात्कुमारी रोरूयते । बोभुज्यते भुवं भूपालः । प्रागास्तां रामलक्ष्मणौ । यदा कर्त्ता प्रथमान्तः कर्म्मणि द्वितीया तदा । यदा कर्त्ता तृतीयान्तः कर्म्मणि प्रथमा तदा । ' सन्ति सन्त कियन्तः '। कुमाराः शेरते स्वैरं रोरूयन्ते च नारकाः । जेगीयन्ते च गीतज्ञा मेम्रियन्ते रुजार्दिताः ॥ २ ॥

## आमन्त्रणे च ॥ ३ ॥

आमन्त्रणमाभिमुखीकरणं तस्मिन्नर्थे प्रथमा विभक्तिर्भवति । मा समुद्धर गोविन्द प्रसीद परमेश्वर । कुमारौ स्वैरमासाथां क्षमध्वं भोस्तपस्विनः ॥ ३ ॥

## भोसः ॥ ४ ॥

भोस् भगोस् अघोस् एते शब्दा निपात्यन्ते धि-

## कर्तरि प्रधाने क्रियाश्रये साधने च ॥ ७ ॥

क्रियासिद्ध्युपकारके करणेऽर्थे तृतीयाविभक्ति-र्भवति ।

भिन्नः शरेण रामेण रावणो लोकरावणः ॥ कराग्रे-ण विदीर्णोऽपि वानरैर्युद्ध्यते पुनः ॥ ७ ॥

इति तृतीया ॥ ३ ॥

## दानपात्रे चतुर्थी ॥ ८ ॥

दानपात्रे सम्प्रदानकारके चतुर्थी । सम्यक् श्रेयोबुद्ध्या प्रदीयते तत् सम्प्रदानं । ददाति दण्डं पुरुषो महीपतेर्नचातिभक्त्या नच दानकाम्यया । यद्दीयते दानतया सुपात्रे तत्संप्रदानं कथितं मुनीन्द्रैः ॥

वेदविदे गां ददाति । अन्यत्र राज्ञो दण्डं ददाति । रजकस्य वस्त्रं ददाति ॥ ८ ॥

॥ इति चतुर्थी ॥ ४ ॥

## विश्लेषाऽवधौ पंचमी ॥ ९ ॥

विश्लेषो विभागस्तत्र योऽवधिश्चलतयाचलतयावा विवक्षितस्तत्रापादाने पञ्चमी। धावतोश्वादपतत्। भूभृतोऽवतरति गंगा ॥ ९ ॥

इति पंचमी ॥ ५ ॥

## सम्बन्धे षष्ठी ॥ १० ॥

सम्बन्धिनोर्मध्ये योऽप्रधानस्तत्र षष्ठी। भेद्यभेदकयोः श्लिष्टःसम्बन्धोन्योन्यमुच्यते। द्विष्ठो यद्यपि सम्बंधः षष्ठ्युत्पत्तिस्तु भेदकात्। एकक्रियातः परस्परापेक्षारूपः सम्बन्धः। राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत् प्रपूजनं। गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥ १० ॥

इति षष्ठी ॥ ६ ॥

## ऋतेयोगे द्वितीयापि ॥ १६ ॥

ज्ञानमृते ॥ १६ ॥

## विनायोगेऽपितृतीया ॥ १७ ॥

ज्ञानेन विना ॥ १७ ॥

## दिग्योगे पंचमी ॥ १८ ॥

पूर्वो ग्रीष्माद्वसन्तः ॥ १८ ॥

## निर्द्धारणे षष्ठीसप्तम्यौ ॥ १९ ॥

निर्द्धारणं क्रियागुणजातिभिः समुदायात् पृथक्करणं तत्र षष्ठीसप्तम्यौ भवतः । क्रियापराणां भगवदाराधकः श्रेष्ठः क्रियापरेषु वा । गवां कृष्णा गौः संपन्नक्षीरा गोषु वा । एतेषां क्षत्रियः शूरतमः एतेषु वा ॥ १९ ॥

## स्वाम्यादियोगे षष्ठीसप्तम्यौ भवतः ॥ २० ॥

गोषु स्वामी गवां स्वामी गवामाधिपतिः गोष्व-धिपतिः ॥ २० ॥

## कर्तृकार्ययोरक्तादौ कृति षष्ठी ॥ २१ ॥

कर्तरि कार्ये च षष्ठी विभक्तिर्भवति क्तादिवर्जिते कृदन्ते शब्दे प्रयुज्यमाने । व्यासस्य कृतिः । भारतस्य श्रवणम् ॥ २१ ॥

## स्मरतौ च कार्ये ॥ २२ ॥

स्मरतौ धातौ प्रयुज्यमाने कर्मणि षष्ठी । मातुः स्मरति मातरं स्मरति ।

हेतौ तृतीया पंचमी च वक्तव्या ॥ * ॥

अनित्यः शब्दः कृतकत्वेन कृतकत्वाद्वा ॥ २२ ॥

## भयहेतौ पंचमी ॥ २३ ॥

चोराद्बिभेति । व्याघ्रात्त्रस्यति । विद्युत्पाताच्चकितः ॥ २३ ॥

## षष्ठीसप्तम्यौ चानादरे ॥ ३२ ॥

बहूनां क्रोशतां गतश्चौरः । बहुष्वसाधुषु निवारयत्स्वपि स्वयमार्यो याति साधुमार्गेण । बहुषु साधुषु वदत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण । मातापित्रो रुदतोः प्रव्रजति पुत्रः ॥ ३२ ॥

## अन्योक्ते प्रथमा ॥ ३३ ॥

यदिदं कार्यत्वादन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्तव्या । घटः क्रियते पटः कार्यः ।

## छन्दसि स्यादिः सर्वत्र ॥ ३४ ॥

दध्ना जुहोति[1] पुनंतु ब्रह्मणस्पतिः । व्रजतीर्विरज्जुः ३४

इति कारकप्रक्रिया समाप्ता ॥

अथार्थवद्विभक्तिविशिष्टानां पदानां[2] समासो निरूप्यते ॥

---

१ दधिहोमं करोतीत्यर्थः. २ पदानामित्यनेन नाममात्रस्य वाक्यस्य च न समास इति सूचयति.

## समासश्चान्वये नाम्नां ॥ १ ॥

नाम्नामन्वययोग्यत्वे सत्येव समासो भवति चशब्दात्तद्धितेऽपि भवति । ततो भार्या पुरुषस्येत्यादौ न भवति परस्परमसम्बन्धात् । स च षड्विधः । अव्ययीभावस्तत्पुरुषो द्वंद्वो बहुब्रीहिः कर्म्मधारयो द्विगुश्चेति । तत्र पूर्वपदप्रधानोऽव्ययीभावः । द्विगुतत्पुरुषौ परपदप्रधानौ । द्वंद्वकर्म्मधारयौ चोभयपदप्रधानौ । बहुब्रीहिरन्यपदप्रधानः । तस्य क्रियाभिसम्बन्धात् उभयपदप्रधानो बलवान् ।

ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च समासप्रयोजनं । स्त्रियमाधिकृत्य भवतीति विग्रहे अन्वययोग्यार्थसमर्थकः पदसमुदायो विग्रहो वाक्य[1]मिति यावत्-

१ तत्रलक्षणं वाक्यपदीये "साकक्षांवयवं भेदे परानाकांक्षशब्दकम् । कर्म्मप्रधाने गुणवदेकार्थं वाक्यमुच्यते"

त्। स्वपदैरन्यपदैर्वा विविच्य कथनं विग्रहः। कृते समासे अव्ययस्य पूर्वनिपातो वक्तव्यः ॥ * ॥१॥

## पूर्वेऽव्ययेऽव्ययीभावः ॥ २ ॥

अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥ २ ॥

इति समाससंज्ञायां सत्यां।

## समासप्रत्यययोः[1] ॥ ३ ॥

समासे वर्तमानाया विभक्तेः प्रत्यये च परे लुग् भवति। इत्यमो लुक्। निमित्ताभावे नैमित्तिकस्याप्यभावः। नामसंज्ञायां स्यादिर्विभक्तिः अधि स्त्री सि इति स्थिते ॥ ३ ॥

## स नपुंसकं ॥ ४ ॥

सोऽव्ययीभावो नपुंसकलिंगो भवति। नपुंसकत्वाद् ह्रस्वत्वं ॥ ४ ॥

---

१ अव्ययाद्विभक्तेर्लुगित्यतो लुगित्यनुवर्तनीयम्.

## अव्ययीभावात् ॥ ५ ॥

अव्ययीभावात्परस्या विभक्तेर्लुग् भवति। अधि-स्त्रि[1] गृहकार्यं। रायमतिक्रांतमातिरि कुलम्। नाव-मतिक्रान्तमातिनु जलम्।

### ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ ॥ * ॥

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथा-र्थाः। रूपस्य योग्यं अनुरूपं। पदार्थान् व्याप्तुमि च्छा वीप्सा। विष्णुं विष्णुं प्रति प्रतिविष्णु। सादृश्ये तु यथा हरिस्तथा हरः ॥ ५ ॥

## यथाऽसादृश्ये ॥ ६ ॥

यथाशब्दः असादृश्ये वर्त्तमानः समस्यते। श-क्ति मनतिक्रम्य करोतीति यथाशक्ति ॥ ६ ॥

---

१ स्त्रियमधि कृत्य भवतीति विग्रहे

## अतोमनतः ॥ ७ ॥

अकारान्तादव्ययीभावात्परस्या विभक्तेरम् भवति अतं वर्जयित्वा । कुम्भस्य समीपं उपकुम्भं वर्त्तते । उपकुम्भं पश्य । उपकुम्भादानय[1] । अनत इति विशेषणात्पंचम्यां अम् न भवति ॥ ७ ॥

## वा टाङ्योः ॥ ८ ॥

टा ङिइत्येतयोर्वा अम् भवति । उपकुम्भेन कृतं उपकुम्भकृतं । उपकुम्भं निधेहि उपकुम्भे निधेहि ।८

## अवधारणार्थे यावति च ॥ ९ ॥

अवधारणार्थे यावच्छब्दे पूर्वपदे सति अव्ययीभावसंज्ञकः समासो भवति । यावंत्यमन्त्राणि संभवंति तावंतो ब्राह्मणान्निमन्त्रयस्वेति यावदमंत्रं । मक्षिकाणामभावो निर्मक्षिकं वर्तते ॥ ९ ॥

॥ इत्यव्ययीभावः ॥

---

१ उपकुम्भाज्जलमुपाददातीत्यादिप्रयोगोपपत्तिः

## अमादौ तत्पुरुषः॥ १॥

द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयस्स तत्पुरुष-संज्ञकः समासो भवति। ग्रामं प्राप्तो ग्रामप्राप्तः। दात्रेण छिन्नं दात्राछिन्नं यूपाय दारु यूपदारु। वृकेभ्यो भयं वृकभयं राज्ञः पुरुषो राजपुरुषः। अक्षेषु शौण्डः अक्षशौण्डः। क्वचिदमाद्यन्तस्य परत्वं। अग्नि आहितः आहिताग्निः। पूर्वं भूतो भूतपूर्वः। समासे क्वचिदैकपद्यं णत्वहेतुः। शराणां वनं शरवणं। आम्राणां वनं आम्रवणं। पानस्य वा। सुरापानं सुरापाणम्॥ १॥

## नञि॥ २॥

नञि पूर्वपदे सति योन्वयः स तत्पुरुषसंज्ञकः समासो भवति॥ न ब्राह्मणः अब्राह्मणः॥ २॥

## ना[1]॥ ३॥

---

१ अत्रनकाराकारयोर्लुप्तषष्ठीद्विवचनान्तो निर्देशः

समासे सति नञोऽकारादेशो भवति ॥ ३ ॥

## नाकादिवर्ज्यं ॥ ४ ॥

नाकं। नपुंसकं ॥ ४ ॥

## अन् स्वरे ॥ ५ ॥

समासे सति नञोऽनादेशो भवति स्वरे परे। अश्वादन्योऽनश्वः। धर्माद्विरुद्धोऽधर्म्मः ग्रहणानामभावोऽग्रहणमित्यादि। तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते ॥ ५ ॥

॥ इति तत्पुरुषः ॥

## चार्थे द्वन्द्वः ॥ १ ॥

समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्रेश्वरं गुरुं च भजस्वेति प्रत्येकमेकक्रियाभिसम्बन्धे समुच्चये समासो नास्ति। बटो भिक्षामट गां चानयेति क्रमेण क्रियाद्वयसम्बन्धे अन्वाचये

च समासो नास्ति परस्परमसम्बन्धात् । इतरेतर-योगे समाहारे चार्थे द्वन्द्वः समासो भवति ।

द्वन्द्वेऽल्पस्वरप्रधाने इकारोकारान्तानां पूर्वनिपातो वक्तव्यः ॥ * ॥

अग्निश्च मारुतश्च अग्निमारुतौ । पटुश्च गुप्तश्च पटुगुप्तौ ॥ १ ॥

## उक्तार्थानामप्रयोगः ॥ २ ॥

स्त्री च पुरुषश्च स्त्रीपुरुषौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खादिरश्च धवखादिरौ ।

देवता[1]द्वन्द्वे पूर्वपदस्य दीर्घो वक्तव्यः ॥ * ॥

अग्निश्च सोमश्च अग्नीषोमौ । इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती ।

अग्न्या[2]देः सोमादीनां षत्वं वक्तव्यं ॥ * ॥

---

१ देवतावाचिनि द्वन्द्वसमासे आदिपदस्य दीर्घःस्यात्,
२ अग्न्यादेरिति पंचम्यंतं

इतरेतरयोगे द्विवचनं। अग्नीषोमौ।

एकवद्भावो वा समाहारे वक्तव्यः ॥ * ॥

शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशाः। तेषां समाहारे शशकुशपलाशम् ॥ २ ॥

## स नपुंसकम् ॥ ३ ॥

यस्यैकवद्भावः[1] स नपुंसकं भवति।

अन्यादीनां विभक्तिलोपे कृते पूर्वस्य सगागमो वक्तव्यः ॥ * ॥

अन्यश्च अन्यश्च अन्योन्यं। परश्च परश्च परस्परम् ॥ ३ ॥

॥ इति द्वन्द्वः ॥

## एकत्वे द्विगुद्वन्द्वौ ॥ १ ॥

एकत्वे वर्तमानौ द्विगुद्वन्द्वौ नपुंसकलिंगौ भवतः १

## संख्यापूर्वो द्विगुः ॥ २ ॥

---

१ यच्छब्दसंबन्धि एकवद्भाव एक्यमितियावत्

संख्यापूर्वः समासो द्विगुर्निगद्यते ॥ २ ॥

## समाहारेऽत ईप् द्विगुः ॥ २ ॥

समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप् प्रत्ययो भवति । दशानां ग्रामाणां समाहारो दशग्रामी । आकारान्तो द्विगुः स्त्रियां भाष्यते । पञ्चाग्नयः[1] समाहृता इति पञ्चाग्नि । पञ्चानां गवां समाहारः पञ्चगु । नपुंसकत्वाद्ध्रस्वत्वम् । त्रिफलेति रूढिः[2] ॥ ३ ॥

पात्रादीनामीप्प्रतिषेधो वक्तव्यः ॥ ❀ ॥

पञ्चपात्रम् । त्रिभुवनम् ।

॥ इति द्विगुः ॥

## बहुव्रीहिरन्यार्थे ॥ १ ॥

अन्यपदार्थे प्रधाने यः समासः स बहुव्रीहिसंज्ञकः

---

१ पंचते अग्नयश्चेति समासः २ रूढिर्योगापहारिणीत्यभियुक्तोक्तिः

समासो भवति। बहु धनं यस्य स बहुधनः। अस्ति धनं यस्य स अस्तिधनः । यस्य प्रधानस्यैकदेशे विशेषणतया यत् प्रतिज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः। यथा लम्बौ कर्णौ यस्य स लम्बकर्णः।

बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः कण्ठे कालो यस्यासौ कण्ठेकालः । करे धनं यस्य स करधनः ॥ १ ॥

## नेंद्वादिभ्यः[1] ॥ २ ॥

सप्तम्यन्तस्य पूर्वनिपातो न भवति। इन्दुशेखरः चक्रपाणिः। पद्मनाभः। कपिध्वजः ॥ २ ॥

## प्रजामेधयोरसुक् ॥ ६ ॥

सुप्रजाः दुर्मेधाः अत्वसोः सौ ॥ ३ ॥

---

१ इंदु आदिर्येषां तेभ्य इत्यर्थः

# धर्मादन् ॥ ४ ॥

सुधर्मा ॥ ४ ॥

# अन्यार्थे ॥ ५ ॥

स्त्रीलिङ्गस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥

# पुंवद्वा ॥ ६ ॥

समासे सति समानाधिकरणे पूर्वस्य स्त्रीशब्दस्य पुंवद्भावो वा भवति । पुंवद्भावादीपो निवृत्तिः । रूपवती भार्या यस्य स रूपवद्भार्यः । वाग्रहणात् कल्याणीप्रिय इत्यादौ न भवति ॥ ५ ॥

# गोः ॥ ७ ॥

गोशब्दस्यान्यार्थे वर्त्तमानस्य ह्रस्वो भवति । पञ्च गावो यस्य स पञ्चगुः ।

सङ्ख्यासु व्याघ्रादिपूर्वस्य[1] पाद-
शब्दस्यालोपो वक्तव्यः ॥ ❋ ॥

---

1 व्याघ्र आदिर्यस्य स व्याघ्रादिः स पूर्वो यस्य तस्य

सहस्रं पादा यस्य स सहस्रपात्। शोभनौ पादौ यस्य स सुपात्। व्याघ्रस्य पादाविव पादौ यस्य स व्याघ्रपात्। द्वौ पादौ यस्य स द्विपात्। द्विपादौ द्विपादः द्विपादं द्विपादौ।

शसादौ स्वरे परे पदादेशश्च वक्तव्य ॥ * ॥

द्विपदः द्विपदा द्विपाद्भ्यां द्विपाद्भिः इत्यादि ॥७॥

## टाडकाः[1] ॥ ८ ॥

समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति। टकारस्तत्पुरुषे च अकारो द्वन्द्व एव च। डकारश्च बहुव्रीहौ ककारोऽनियमो मतः ॥ ७ ॥

## नो वा ॥ ९ ॥

नान्तस्य पदस्य टेर्लोपो वा भवति यकारे स्वरे परे। वाग्रहणात् कचिन्न भवत्युपधालोपश्च।

---

१ टश्च अश्च डश्च कश्च एतेषां समाहारः "टाडकाः"

अन्हो मध्यं मध्याह्नः। कवीनां राजा कविराजः। टकारोनुबन्ध ईबर्थः। कविराजी। राज्ञां पूः राजपुरं। वाक् च मनश्च वाङ्मनसं। दक्षिणस्यां दिशि पन्थाः दक्षिणापथः। अहश्च रात्रिश्च अहोरात्रं। द्वौ च त्रयश्च परिमाणं येषां ते द्वित्राः। पञ्च च षट् च परिमाणं येषां ते पञ्चषाः। बहवो राजानो यस्यां नगर्य्यां सा बहुराजा नगरी। अत्र टिलोपे कृते आबतः स्त्रियाम् इत्याप्। बहवः कर्त्तारो यस्य स बहुकर्तृकः॥ ९॥

## कर्म्मधारयस्तुल्यार्थे॥ १०॥

पदद्वये तुल्यार्थे एकार्थनिष्ठत्वे सति कर्म्मधारयः समासो भवति। नीलं च तदुत्पलं च नीलोत्पलम्। रक्ता चासौ लता च रक्तलता। पुमांश्चासौ कोकिलश्चेति पुंस्कोकिलः॥ १०॥

पुसः खपे संयोगान्तालोपो वक्तव्यः ॥ ॥

## नाम्नश्च कृता समासः ॥ ११ ॥

प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समासस्तत्पुरुषो भवति । प्रकृष्टो वादः प्रवादः । कुम्भं करोतीति कुम्भकारः ॥ ११ ॥

## सहादेः सादिः ॥ १२ ॥

समासे सति सहादीनां सादिर्भवति । पुत्रेण सह वर्त्तत इति सपुत्रः । सहसान्तिरसां सध्रिसमितिरः । सह अञ्चतीति सध्र्यङ् । सम् अञ्चतीति सम्यङ् । तिर अञ्चतीति तिर्य्यङ् ॥ १२ ॥

## कोः कदादिः ॥ १३ ॥

कुशब्दस्य कुत्सितेषदर्थयोस्तत्पुरुषे कत् कव का आदेशा भवंति ॥ कुत्सितं अन्नं कदन्नं । ईषदर्थे ईषदुष्णं कवोष्णं ॥ १३ ॥

## कोर्म्मैदादेशश्च॥ १४॥

मन्दोष्णं॥ १४॥

## रथवदयोश्च॥ १५॥

कद्रथः। कद्वदः॥ १५॥

## पुरुषेवा॥ १६॥

कुपुरुषः कापुरुषः॥ १६॥

## पथ्यक्षेयोः[2]॥ १७॥

कोः कादेशः स्यात्। कुपथः कापथः। कुअक्षः काक्षः॥ १७॥

## ईषदर्थे च॥ १८॥

ईषज्जलं काजलं। षड्भिराधिका दश षोडश। षट् दन्ता यस्य स षोडन्। षष् दन्त इति स्थिते॥

---

१ चकारात्कदादयोपि २ सूत्रवत्भ्रान्ताचित्तैः प्राक्षिप्तम्

दन्तस्य दत्[1]। ऋ इत् षस्य उत्वं दस्य डः । त्रि-
तो नुम् । षोडन् । षट् प्रकाराः षोढा । संख्यायाः
प्रकारे धा ॥ १८ ॥

धस्य ढः षष उत्वं दतृदशधासूत्तरपदादेः
ष्टुत्वं च भवतीति वक्तव्यम् ॥ ❋ ॥

## बृहच्छब्दस्य सुडागमे तलोपश्च ॥ १९ ॥

बृहतां पतिः बृहस्पतिः ॥ १९ ॥

## महच्छब्दस्य टेराकारः समानाधिकरणे ॥ २० ॥

महादेवः महेश्वरः । द्यौश्च भूमिश्च द्यावाभूमी ।
द्योशब्दस्य द्यावादेशः । जायायाः जम्भावो दंभा

---

१ निपातत्वात् २ दतृदशधासु पूर्वपदेषु सत्सु

निपात्यते । दम्पती जम्पती । क्वचिज्जायांपती[1] । आकृतिगणोयं ॥ २० ॥

## अलुक् क्वचित् ॥ २१ ॥

क्वचित्समासे कृदन्ते तद्धितेपि विभक्तेरलुग् भवति कृच्छ्रान्मुक्तः । अप्सु योनिरस्येत्यप्सुयोनिः । उरसि लोम यस्यासौ उरसिलोमा । हृदि स्पृशतीति हृदिस्पृक् । कण्ठे कालो यस्यासौ कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः पश्यतोहरः । वनेचरः खेचरः ।

### समानाधिकरणे[2] शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्यः ॥ * ॥

शाकः प्रियः यस्य सः शाकप्रियः शाकप्रिय श्चासौ पार्थिवश्च शाकपार्थिवः ॥ २१ ॥

---

१ जायाप्रतिग्राहितगंधमाल्यामिति कालिदासः

२ समानं अधिकरणं यस्य तत्समानाधिकरणं तस्मिन्

## आदेश्च द्वन्द्वे ॥ २२ ॥

द्वंद्वे समासे पूर्वपदस्य लोपो भवति । चकारग्रहणात् विकल्पेन । माता च पिता च पितरौ । शिष्यमाणो लुप्यमानार्थाभिधायी । श्वश्रुश्च श्वशूरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ ॥ २२ ॥

## ऋतां[1] द्वन्द्वे ॥ २३ ॥

द्वन्द्वे समासे पूर्वपदस्य ऋकारस्य वा आकारो भवति । माता च पिता च मातापितरौ ॥ २३ ॥

## द्वन्द्वे सर्वादित्वं वा ॥ २४ ॥

द्वंन्द्वे समासे सर्वादित्वं वा भवति । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे वर्णाश्रमेतराः ।

वैयाधिकरण्ये बहुव्रीहौ मध्यमपदलोपो वक्तव्यः ॥ * ॥

कुमुदस्य गन्ध इव गन्धो यस्य सः कुमुदगंधिः २४

---

१ ऋकारान्तानां द्वन्द्वसमासे आत्वं वा वाच्यमित्यर्थः

## उपमानाच्च ॥ २५ ॥

उपमानात्परस्य गन्धशब्दस्याकारो भवति । हंसस्य गमनमिव गमनं यस्याः हंसगमना ॥ २५ ॥

## दिक्सङ्ख्ये[1] संज्ञायाम् ॥ २६ ॥

दिग्वाचकसंख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति । अविग्रहो[2] नित्यसमासः अन्यस्त्वस्वपदविग्रहोपि । दक्षिणाग्निः सप्तग्रामः ॥ २६ ॥

॥ इति समासप्रक्रिया ॥

## ॥ अथ तद्धितो[3] निरूप्यते ॥

## अपत्येऽण् ॥ १ ॥

---

१ दिक्च संख्या च संज्ञायामेव समस्येते नान्यत्र इति वक्तव्यम्

२ नास्ति विग्रहो वाक्यं यत्र स नित्यसमास इत्यर्थः

३ वक्ष्यमाणाया प्रत्ययराशिस्तद्धितसंज्ञः स च निरूप्यते इत्यर्थः अथवा पूर्वाचार्यसंज्ञाचेयं स च तद्धितो द्विविधः प्रकृत्यर्थाभिन्नः स्वार्थिकश्च तत्र आद्यंनिरूपयति

नाम्नोऽपत्येऽर्थे अण् प्रत्ययो भवति । उपगोरपत्य-मिति वाक्ये उपगो अण् इति स्थिते समासप्रत्यय-योरिति षष्ठीलोपः । णकारो वृद्ध्यर्थः ॥ १ ॥

## आदिस्वरस्य ञ्णिति च वृद्धिः ॥ २ ॥

स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञ्णिति तद्धिते परतः । उकारस्य औकारो वृद्धिः ॥ २ ॥

## वोऽव्यस्वरे ॥ ३ ॥

उकारस्यौकारस्य च अव् भवति यकारे स्वरे च परे । औपगवः । वासिष्ठः गौतमः । शिवादिभ्यश्चे[1]ति वक्तव्यः ॥*॥ शैवः वैदेहः ॥३॥

## ऋ उराणि ॥ ४ ॥

ऋकारस्य उर् भवति अणि परे ॥ ४ ॥

## षषो णो मातरि ॥ ५ ॥

1 चकारादत्राप्यण् भवति इति ज्ञेयम् ।

षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥ ५ ॥

## अत इञनृषेः ॥ ६ ॥

अकारान्तात् नाम्नोऽनृषिशब्दादपत्येर्थे इञ् प्रत्ययो भवति । यस्य लोपः । देवदत्तस्यापत्यं दैवदत्तिः । श्रीधरस्यापत्यं श्रैधरिः । दशरथस्यापत्यं दाशरथिः । पुरन्दरस्यापत्यं पौरन्दरिः ॥ ६ ॥

## बह्वादिभ्यश्च ॥ ७ ॥

औपगाविः कार्ष्णिः औडुलोमिः आग्निशर्मिः ॥ ७ ॥

## ण्यायनणेयण्णीया गर्गनडात्रिस्त्रीपितृष्वस्रादेश्च ॥ ८ ॥

गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात् पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अप-

---

१ कथं तर्हि प्रदीयतां दाशरथाय मैथिलीत्युच्यते इह योगविभागःकर्त्तव्यः तत्र चाणनुवर्तते ततश्चायमर्थः "अतः" अकारान्तादण् प्रत्ययो भवति ततो नास्ति कुत्रचिदपि बाधः

त्येर्थे । गर्गस्यापत्यं गार्ग्यः वत्सस्यापत्यं वात्स्यः । नडस्यापत्यं नाडायनः । चरस्यापत्यं चारायणः । अत्रेरपत्यं आत्रेयः । गांगेयः । मह्या अपत्यं माहेयः । कपेरपत्यं कापेयः । पैतृष्वस्रीयः ॥ ८ ॥

## अलुक् क्वचित् ॥ ९ ॥

अमुष्य अपत्यं आमुष्यायणः ।

मातृपितृभ्यां स्वसुः सत्य षत्वं वक्तव्यं ॥ * ॥

मातृष्वस्रीयः ॥ ९ ॥

## पितृमातृभ्यां व्यडुलौ ॥ १० ॥

पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ॥ १० ॥

## पितुर्डामहन् ॥ ११ ॥

पितुः पिता पितामहः । पितुर्माता पितामही ॥११

## लुग्बहुत्वे क्वचित् ॥१२॥

अपत्येर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचि-

ष्वनृषिविषये लुग् भवति । गर्गाः वसिष्ठाः अत्रयः विदेहाः ॥ १२ ॥

## देवतेदमर्थे ॥ १३ ॥

देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति । इन्द्रो-देवता अस्येति ऐन्द्रं हविः । सोमो देवता अस्येति सौम्यं । देवदत्तस्य इदं दैवदत्तं वस्त्रम् ॥ १३ ॥

## क्वचिद्द्वयोः ॥ १४ ॥

पूर्वपदोत्तरपदाद्योः क्वचिद्वृद्धिर्भवति । अग्निमरुतौ देवते अस्येति आग्निमारुतं कर्म्म सुहृदो भावः सौहार्दं ॥ १४ ॥

अत्र भावे अण् वक्तव्यः ॥ * ॥

## णितो वा ॥ १५ ॥

उक्ताः प्रत्यया विषयान्तरेऽपि णितो वा भवंति । अजो गौर्यस्य सः अजगुस्तस्येदं धनुः आजगवं अजगवं वा । कुमुदस्य गन्ध इव गन्धो यस्य स कु-

मुदगंधिः तस्यापत्यं स्त्री कौमुदगन्ध्या। श्वशुरस्यायं श्वाशुर्यो ग्रामः। विष्णोरिदं वैष्णवं। गोरिदं गव्यम्। कुलस्य इदं कुल्यम्॥ १५॥

त्वन्मदेकत्वे॥ १६॥

तव इदं त्वदीयं ममइदं मदीयं॥ २६॥

चतुरश्च लोपः॥ १७॥

चतुर्शब्दस्य चकारस्य लोपो भवति ण्यणीययोः परतः। तुर्य्यः तुरीयः॥ १७

अन्यस्य दक्॥ १८॥

अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे। अन्यस्य इदं अन्यदीयं। अर्द्धजरत्या इदं अर्द्धजरतीयं॥ १८॥

कारकात् क्रियायुक्ते॥ १९॥

कारकादप्येते प्रत्यया भवंति क्रियायुक्ते कर्तरि

कर्मणि चाभिधेये । कुंकुमेन रक्तं वस्त्रं कौङ्कुमम् । मथुरायाः आगतो माथुरः ग्रामे भवः ग्राम्यः । धुरं वहतीति धुर्यः धौरेयः ॥ १९ ॥

## केनेयेकाः ॥ २० ॥

क इन इय इक इत्येते प्रत्यया भवन्ति भवाद्यर्थेषु । णित्वं चैषां वैकल्पिकं । कर्णाटे भवः कार्णाटकः कर्णाटको वा । ग्रामादागतस्तत्र जातो वा ग्रामीणः ग्राम्यः । सध्रीचि भवः सध्रीचीनः । समीचि भवः समीचीनः । तिरश्चि भवः तिरश्चीनः ॥ २० ॥

## यलोपश्च ॥ २१ ॥

क्वचिद्यकारलोपो भवति । कन्यायाः जातः कानीनः ।

नक्षत्रादण् वक्तव्यः ॥ * ॥

पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः ॥ २१ ॥

## इयो वा ॥ २२ ॥

क्षतात् त्रायतइति क्षत्रं क्षत्रे भवः क्षात्रियः क्षात्रः। शुक्राज्जातं शुक्रियं। इन्द्राज्जातं इंद्रियं। अक्षैर्दीव्यतीति आक्षिकः। शब्दं करोतीति शाब्दिकः। तर्कं करोतीति तार्किकः। वेदे जाता वैदिकी स्तुतिः ऋग्वा ॥ २२ ॥

## किमादेस्त्यतनौ ॥ २३ ॥

किमादेरद्यादेर्भवाद्यर्थेषु त्यतनौ प्रत्ययौ भवतः। कुत्र भवः कुत्रत्यः। कुतस्त्यः। अद्य भवः अद्यतनः। ह्यो भवः ह्यस्तनः। श्वो भवः श्वस्तनः। सदा भवः सदातनः।

दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः ॥ * ॥ दाक्षिणात्यः। पाश्चात्त्यः। पौरस्त्यः ॥ २३ ॥

## स्वार्थेऽपि ॥ २४ ॥

उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति । देवदत्त एव दैवदत्तकः । चत्वार एव वर्णाः चातुर्वर्ण्यं । चोर एव चौरः । भागरूपनामभ्यो धेयः स्वार्थेऽपि । भागधेयः रूपधेयः नामधेयः ॥ २४ ॥

## अणीनयोर्युष्मदस्मदो- स्तवकादिः ॥ २५ ॥

अणीनयोर्युष्मदोस्तवकादय आदेशा भवन्ति । तव इदं तावकं । मम इदं मामकं । तावकीनः । मामकीनः । यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीनः ॥ २५ ॥

## वत्तुल्ये ॥ २६ ॥

तुल्ये सादृश्येऽर्थे वत् प्रत्ययो भवति । चन्द्रेण तुल्यं चन्द्रवत् मुखं । घटेन तुल्यं घटवत् उदरम् । रूपवत् कम्बलम् ॥ २६ ॥

## भावे तत्वयणः ॥ २७ ॥

शब्दस्य प्रवृत्तिनिमित्तं भावस्तस्मिन् भावे तत्व यण् इत्येते प्रत्यया भवन्ति । ब्राह्मणस्य भावो ब्राह्मणता । त्वयणौ नंपुसकलिंगौ भवतः । ब्राह्मणत्वं ब्राह्मण्यं । सुमनसो भावः सौमनस्यं। सुभगस्य भावः सौभाग्यं । विदुषो भावः । वैदुष्यं॥ २७॥

## समाहारे ता च गुणः ॥ २८ ॥

त्रयाणां समाहारः त्रेता । जनानां समूहो जनता देवता ।

कर्म्मण्यपि यण् वक्तव्यः ॥ * ॥

ब्राह्मणस्य कर्म्म ब्राह्मण्यं । राज्ञः इदं कर्म्म राजन्यं ।

## लोहितादेर्डिमन् ॥ २९ ॥

लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति स च डित् । डित्त्वाट्टिलोपः । लोहितिमा । अणोर्भावः अणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ॥ २९ ॥

ऋ र इमनि ॥ ३० ॥

ऋकारस्य रेफो भवति इमनि परे। प्रथिमा। द्रढिमा। बहोर्भाव इति विग्रहे ॥ ३० ॥

बहोर्लोपो भूश्च बहोः ॥ ३१ ॥

बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति। बहोः स्थाने भूश्चादेशः। बहोर्भावो भूमा ॥ ३१ ॥

अस्त्यर्थे मतुः ॥ ३२ ॥

नाम्नो मतुप्रत्ययो भवति अस्यास्मिन्नस्तीत्येतस्मिन्नर्थे। उकारो नुम्विधानार्थः। उितो नुम्। गोमान्। श्रीमान्। गोमती। श्रीमती। आयुष्मान् ॥ ३२ ॥

अइकौ च मत्वर्थे ॥ ३३ ॥

मत्वर्थे अइकौ प्रत्ययौ भवतः। वैजयन्ती पताका

अस्य अस्मिन् वा वैजयन्तः प्रासादः । माया विद्यते अस्यास्मिन्वा मायिकः ॥ ३३ ॥

## मान्तोपधाद्वात्विनौ ॥ ३४ ॥

मकारान्तान्मकारोपधादकारांताद्दकारोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे । किंवान् लक्ष्मीवान् भगवान् । धनी दण्डी छत्री । दृषद्वती भूमिः शर्मी । कामी ॥ ३४ ॥

## तडिदादिभ्यश्च ॥ ३५ ॥

तडित्वान् विद्युत्वान् मरुत्वान् ॥ ३५ ॥

## एतत्कियत्तद्भ्यः परिमाणे वतुः ॥ ३६ ॥

## यत्तदोरा ॥ ३७ ॥

यत्तदोष्टेरात्वं भवति वतौ परे ॥ ३६ ॥ ३७ ॥

## किमः किय्यश्च ॥ ३८ ॥

किमूशब्दस्य किरादेशो भवति वतौ परे । चकारान्मस्य वकारस्य यकारो भवति । कियान् ॥ ३८॥

## आइश्चैतदो वा ॥ ३९ ॥

वतुप्रत्यये परे एततशब्दस्य आइश् इत्येतावादेशो भवतः । गुरुः शिच्चेति शित्त्वात्कृत्स्नस्य आ इति गुरुस्तथापि चकारादन्तस्यैव टेकारादेशो भवति न कृत्स्नस्य । यस्मिन् पक्षे आइशादेशस्तस्मिन् पक्षे प्रत्ययस्य वकारस्य यकारादेशो भवति । एतावान् इयान् ॥ ३९ ॥

## तुन्दादेरिलः ॥ ४० ॥

तुन्दादेरिलप्रत्ययो भवति अस्त्यर्थे । तुन्दमस्यास्तीति तुंदिलः ॥ ४० ॥

## औन्नत्ये दन्तादुरः ॥ ४१ ॥

उन्नता दन्ता यस्य सः दन्तुरः ॥ ४१ ॥

श्रद्धादेर्लुः ॥ ४२ ॥

श्रद्धादेर्गणाल्लुप्रत्ययो भवति । श्रद्धास्यास्तीति श्रद्धालुः । दयालुः कृपालुः ।

अस्मायामेधास्रग्भ्योऽस्त्यर्थे विनुर्वक्तव्यः । तपोऽस्यास्तीति तपस्वी । मायावी । मेधावी । स्रग्वी ४२

वाचो ग्मिनिः ॥ ४३ ॥

वाग्मी ॥ ४३ ॥

आलाटौ कुत्सितभाषिणि ॥ ४४ ॥

वाचालः । वाचाटः ॥ ४४ ॥

ईषत्समाप्तौ कल्पदेश्य-
देशीयाः ॥ ४५ ॥

ईषत् परिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः कविदेशीयः ॥ ४५ ॥

## प्रशंसायां रूप्यः ॥ ४६ ॥

प्रशस्तो वैयाकरणो वैयाकरणरूप्यः ॥ ४६ ॥

## भूतपूर्वे चरट् ॥ ४७ ॥

दृष्टचरः। दृष्टचरी ॥ ४७ ॥

## प्राचुर्यविकारप्राधान्यादिषु मयट् ॥ ४८ ॥

अन्नं प्रचुरं यस्मिन् सः अन्नमयः यज्ञः। मृन्मयो घटः। स्त्रीमयो जाल्मः। अमृतमयश्चन्द्रः।

तदधीते वेदयत्राण् वक्तव्यः ॥ * ॥

व्याकरणमधीते वेद वा वैयाकरणः। शोभनः अश्वः तं वेदेति सौवश्वः ॥ ४८ ॥

## न सन्धिय्वोर्युट् च ॥ ४९ ॥

सन्धिजौ य्वौ सन्धिय्वौ तयोः सन्धिजयोर्यकारवकारयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति

किन्तु तयोर्युडागमो भवति इट् उट् इत्येतावागमौ भवतः। वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः वकारात्पूर्वमुकारः। स्वरहीनं परेण संयोज्यं। आदिस्वरस्य ञ्णिति च वृद्धिः। वैयाकरणः सौवश्वः॥४९

## इतो जातार्थे ॥ ५० ॥

लज्जितः। पण्डितः। तृषितः ॥ ५० ॥

## तरतमेयस्विष्ठाः प्रकर्षे ॥ ५१ ॥

अतिशयेऽर्थे तर तम इयसु इष्ठ इत्येते प्रत्यया भवन्ति। अतिशयेन कृष्णः कृष्णतरः। अतिशयेन शुक्लः शुक्लतमः।

ईयस्विष्ठौ डिताविति वक्तव्यौ ॥ * ॥

उकारो नुम्विधानार्थः। न्सम्महत इति दीर्घः। अतिशयेन लघुः लघीयान्। अतिशयेन पापः पापिष्ठः पापीयान् पापीयसी। लघिष्ठः लघीयान् लघीयसी ॥ ५१ ॥

## गुर्वादेरिष्ठेमनीयस्सुगरादिष्टि-लोपश्च ॥ ५२ ॥

गुरु प्रिय स्थिर स्फिर उरु बहुल वृद्ध दीर्घ प्रशस्य बाढ युवन् अल्प स्थूल दूर अन्तिकानां क्रमेण गर प्र स्थ स्फ वर् बंहि ज्या द्राघ श्र साध यव कन स्थ वद वनेद एते आदेशा भवन्ति । अतिशयेन गुरुः गरीयान् गरिष्ठः गुरोर्भावो गरिमा । अतिशयेन प्रियः प्रेयान् प्रेष्ठः प्रेमा । अतिशयेन स्थिरः स्थेयान् स्थेष्ठः स्थेमा । अतिशयेन उरुः वरीयान् वरिष्ठः । अतिशयेन स्फिरः स्फेयान् । अतिशयेन बहुलः बंहीयान् । अतिशयेन वृद्धः । इलोपो ज्याशब्दादीयसः । ज्यायान् ज्येष्ठः । अतिशयेन दीर्घः द्राघीयान् द्राघिष्ठः द्राघीयसी द्राघिमा । प्रशस्यस्य श्रादेशः इष्ठस्येकारस्य यिर्भवति श्रेष्ठः । अतिशयेन बहुः भूयिष्ठः । ईयस इलोपः । भूयान् भूयसी

दूरस्य दवादेशः दविष्ठः दवीयान् दवीयसी । क्षिप्रशब्दस्य क्षेपादेशः क्षेपिष्ठः क्षेपीयान् । क्षुद्रशब्दस्य क्षोदादेशः क्षोदीयान् ॥ ५२ ॥

## बहोरिष्ठेयिः ॥ ५३ ॥

बहोत्तरस्येष्ठप्रत्ययस्येकारस्य यिर्भवति । बहोः स्थाने भूश्चादेशः । भूमा भूयिष्ठः ।

किमोव्ययादाख्याताच्च तरतमयोराम्वक्तव्यः॥*॥

कुतस्तरां परमाणवः । कुतस्तेषामारम्भकत्वम् । उच्चैस्तरां गायति । पठतितमां पचतितमां ॥५३॥

## अव्ययसर्वनाम्नामकच्प्राक्टेः ॥५४॥

उच्चकैः । यकः । सकः । सर्वकः ॥ ५४ ॥

## परिमाणे दघ्नादयः ॥ ५५ ॥

परिमाणेर्थे दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवन्ति । जानुदघ्नं जलं । शिरोद्वयसं । पुरुषमात्रम् ।

द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ ॥ * ॥

कतरो भवतां काण्वः । कतमो भवतां तांत्रिकः । भवतोर्यतरस्तार्किकस्ततर उद्गृह्णातु ॥ ५५ ॥

संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः ॥ ५६ ॥

द्वयोः संख्यापूरकः द्वितीयः । त्रयाणां संख्यापूरकः तृतीयः । त्रेः सम्प्रसारणम् ॥ ५६ ॥

षट्चतुरोस्थट् ॥ ५७ ॥

षष्ठः चतुर्थः ॥ ५७ ॥

पंचादेर्मट् ॥ ५८ ॥

पञ्चमः । सप्तमः । अष्टमः । नवमः ॥ ५८ ॥

विंशत्यादेर्वा तमट् ॥ ५९ ॥

विंशतितमः विंशतिः ॥ ५९ ॥

विंशतेस्तिलोपो डिति ॥ ६० ॥

विंशः त्रिंशत्तमः ॥ ६० ॥

शतादेर्नित्यं ॥ ६१ ॥

शततमः ॥ ६१ ॥

एकादशादेर्डच्च् ॥ ६२ ॥

एकादशः । द्वित्र्यष्टानां द्वात्रयोष्टाः । द्वादशः त्रयोदशः अष्टादशः ॥ ६२ ॥

कतिकतिपयाभ्यां थः ॥ ६३ ॥

कतिथः । कतिपयथः ॥ ६३ ॥

संख्यायाः प्रकारे धा ॥ ६४ ॥

द्विप्रकारं द्विधा चतुर्धा । गुणो अण्च । द्वेधा त्रेधा । णित्वात् वृद्धिः । यस्य लोपः अतोम् । द्वैधम् त्रैधम् ॥ ६४ ॥

क्रियाया आवृत्तौ कृत्वसू ॥ ६५ ॥

पञ्चकृत्वः सप्तकृत्वः ॥ ६५ ॥

द्वित्रिभ्यां सुः ॥ ६६ ॥

द्विः त्रिरुक्तं ॥ ६६ ॥

बह्वादेः शस् ॥ ६७ ॥

बहुशः शतशः ॥ ६७ ॥

तयायटौ संख्यायां ॥ ६८ ॥

द्वितयं त्रितयं द्वयं त्रयं ॥ ६८ ॥

शेषा निपाताः कत्यादयः ॥ ६९ ॥

का संख्या येषां ते कति ॥ ६९ ॥

॥ इति तद्धितप्रक्रिया समाप्ता ॥

॥ इति सारस्वते पूर्वार्द्धं संपूर्णम् ॥

पं० श्रीधरात्मज कृष्णलालशर्मा
'ज्ञानसागर' प्रेसाध्यक्ष.
मुम्बई.

# जाहिरात.

**(१) लघुचंद्रिका**—भाषाटीकासहित छपती है. जैसे कि सिद्धांतकौमुदीसे लघुकौमुदी निकाली गई है इसी प्रकार सिद्धांतचंद्रिकासे यह लघुचंद्रिका बनाईहै. व्याकरण शीखनेवालेकों अति उत्तम है.

**(२) संस्कृत प्रवेशिका**—भाषाटीकासहित यह संस्कृत शीखनेवालेकूं अति उपयोगी है. पहिली आवृत्ति हातों हात्त विकगई इसवास्ते द्वित्तीयाआवृत्ति बहुत सुधारकें छापी गई. किंमत फक्त ८ आने करादियाहै. ट. ख. २ आना.

**(३) कातंत्र पंचसंधि**—भाषाटीकासहित विद्यार्थियोंको संस्कृत शीखनेकूंबडा सुगममार्ग करंदियाहै. किं. २ आना.

और हमारे यहां सर्व प्रकारके पुस्तक संस्कृत व हिंदीभाषाके बडे सूचिपत्रमें लिखे हुए हैं. जिन महाशयोंको सूचिपत्र चाहिये सो आध आनेका टिकिट टपालखर्च लगानेकूं भेजके मंगालेवें सूचिपत्रकी किंमत नहीं ली जाती. आशा है की हमारे सहायदाता ग्राहकजन हरएक प्रकारकी पुस्तक मंगानेंकी कृपा अवश्य करेंगे.

**ग्राहकोंका शुभचिन्तक,**

**पं० श्रीधरशिवलाल ज्ञानसागर छापखाना मुंबई.**

☞ योगवासिष्ठ वैराग्य और मुमुक्षुप्रकरण मूलश्लोक टीकाभाषासहित छपके तैयार हैं. किंमत कपडेका जिल्दका २ रुपये, कागदकी जिल्दका १॥ रुपिया. ट. ख. ४ आना.